# श्रीरमणपूजाविधानम्
# श्रीरमणसहस्रनामस्तोत्रं च





त्रातारमन्यं कमुपैमि देवं भूतानुकंपा क्व नु तादृगास्ते ।
पूताशयं तद्रमणं महर्षिं जातादरं धावति मानसं मे ॥

श्रीरमणाश्रमः - अरुणाचलः

1944

श्रीः

# श्रीमद्रमणपूजाविधानं -
# श्रीरमणसहस्रनामस्तोत्रं च

श्रीरमणाश्रमसर्वाधिकारिणा

निरञ्जनानन्दस्वामिना

प्रकाशितम् ॥

अरुणाचलः मूल्यमाणकषट्कं ॥

1944.

## ॥ प्रस्तावना ॥

भगवतः श्रीरमणस्य पूजाविधानं सहस्रनामस्तोत्रं च बहूनां तद्भक्तानामभ्यर्थनानुसारेण बहिः प्राचीकशाम । संक्षिप्तमपि पूजाविधानं इतरसाहाय्यं विना तत्पूजां विधातुं भक्तानामत्यन्तमुपकारकमेव स्यात् । दिनेदिने जयन्त्यादिविशेषदिने वा पारायणार्चनोपयोगितया भगवतस्सहस्रनामस्तोत्रेण सह तन्नामावलिश्च मुद्रिता भक्तानां प्रमोदाय भवेदिति विश्वसिमः । अनेन च ग्रन्थेन सर्वेऽपि भगवद्भक्ताः कृतार्थतामासादयन्तु स्वकं जन्मेति प्रार्थना ॥

इत्थं

निरञ्जनानन्दस्वामी,

सर्वाधिकारी

# ॥ श्रीमद्रमणपूजाविधानम् ॥

अथ पादौ प्रक्षाल्य आचम्य प्राणानायम्य—

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

प्रणवस्य परब्रह्मऋषिः देवी गायत्रीच्छन्दः सविता परमात्मा देवता प्राणायामे विनियोगः ॥

ॐ भूः..........

संकल्पः ॥

करिष्यमाणस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं आदौ विघ्नेश्वरपूजां करिष्ये । अप उपस्पृश्य ।

विघ्नेश्वरपूजा ॥

गणानां त्वा गणपतिँ हवामहे कविं कवीनां उपमश्रवस्तमं । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनश्शृण्वन्नूतिभिः सीदसादनम् ॥

(स्त्रियश्चेत्)

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

अस्मिन्हरिद्राबिंबे महागणपतिं स्मरामि ध्यायाम्यावाहयामि ।

महागणपतये नमः आसनं समर्पयामि ।
महागणपतये नमः पादयोः पाद्यं समर्पयामि ।
महागणपतये नमः हस्तयोः अर्घ्यं समर्पयामि ।
आचमनीयं समर्पयामि । स्नानं समर्पयामि ।

आपोहिष्ठामयोभुवः, तानऊर्जेदधातन, महेरणाय चक्षसे, योवश्शिवतमो रसः, तस्य भाजयतेहनः, उशतीरिव मातरः, तस्मा अरङ्गमामवः, यस्य क्षयाय‌जिन्वथ, आपोजनयथाचनः ।

स्नानानन्तरं आचमनीयं समर्पयामि ॥

वस्त्रयज्ञोपवीतोत्तरीयाभरणार्थाः इमे अक्षताः । एते गन्धाः । गन्धान् धारयामि । गन्धस्योपरि अक्षतान् समर्पयामि । पुष्पमालां समर्पयामि । पुष्पाणि पूजयामि ॥

सुमुखाय नमः एकदन्ताय नमः कपिलाय नमः गजकर्णकाय नमः लंबोदराय नमः विकटाय नमः विघ्नराजाय नमः धूमकेतवे नमः गणाध्यक्षाय नमः फालचन्द्राय नमः शूर्पकर्णाय नमः हेरंबाय नमः स्कन्दपूर्वजाय नमः सिद्धिविनायकस्वामिने नमः महागणपतये नमः परिमलपत्रपुष्पाणि समर्पयामि । धूपार्थं अक्षतान् समर्पयामि । दीपार्थं अक्षतान् समर्पयामि । धूपदीपानन्तरमाचमनीयं समर्पयामि ॥

नैवेद्यम्—भूर्भुवस्सुवः + देवसवितः प्रसुव ।

महागणपतये नमः अमृतोपस्तरणमसि स्वाहा । प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहा ।

महागणपतये नमः नालिकेरखण्डद्वयं कदलीफलं महानैवेद्य निवेदयामि । मध्ये मध्ये पानीयं समर्पयामि ।

उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनं समर्पयामि । पादप्रक्षालनं समर्पयामि । नैवेद्यानन्तरं आचमनीयं समर्पयामि ।

भूर्भुवस्सुवः ॥

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥

महागणपतये नमः दिव्यतांबूलं समर्पयामि ।

स्वर्णपुष्पदक्षिणां समर्पयामि । सर्वोपचारपूजां समर्पयामि ।

प्रार्थना ॥

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

इति विघ्नेश्वरपूजा समाप्ता ॥

## संकल्पः ॥

शुभे शोभने मुहूर्ते + शुभतिथौ ममोपात्तसमस्तदुरितक्षयद्वारा परमेश्वरप्रीत्यर्थं अस्माकं सहकुटुम्बानां क्षेमस्थैर्यधैर्यवीर्यविजयायुरारोग्यैश्वर्याभिवृद्ध्यर्थं अहरहः सत्सन्तानसमृद्ध्यर्थं समस्तमङ्गलावाप्त्यर्थं समस्तदुरितोपशान्त्यर्थं धर्मार्थकाममोक्षचतुर्विधफलपुरुषार्थसिद्ध्यर्थं इष्टकाम्यार्थसिद्ध्यर्थं (सुमङ्गल्यः) दीर्घसौमङ्गल्यावाप्त्यर्थं (इतरे) ज्ञानवैराग्यसिद्ध्यर्थं श्रीरमणप्रीत्यर्थं श्रीरमणप्रसादसिद्ध्यर्थं यावच्छक्ति षोडशोपचारविधानेन भगवद्रमणदेवतापूजां करिष्ये । तदङ्गं कलश पूजां च करिष्ये । अप उपस्पृश्य ।

वक्रतुण्डमहाकाय × सर्वदा । अस्मात् हरिद्राबिंबात् महागणपतिं यथास्थानं प्रतिष्ठापयामि इति महागणपतिमुद्वास्य, कलशपूजां कुर्यात् ॥ कलेश गन्धपुष्पाद्यैरभ्यर्च्य कलशमभिमृश्य जपेत् ।

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥

अङ्गैश्च सहितास्सर्वे कलशांबुसमाश्रिताः ।
सर्वे समुद्रास्सरितस्तीर्थानि च नदा ह्रदाः ॥

आयान्तु गुरुपूजार्थं दुरितक्षयकारकाः ।
गङ्गे च यमुने चैव गोदावरिसरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥

(पूजाद्रव्याणि संप्रोक्ष्य आत्मानं च प्रोक्ष्य)

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुर्वे घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥

(इत्यनेन घण्टानादं कृत्वा)

पुष्पाक्षतान् गृहीत्वा

अरुणाद्रिचरं देवमाश्रिताभयदायिनम् ।
अप्राकृतपरञ्ज्योतिरभेदध्यानशालिनम् ॥
प्रसन्नवदनं शान्तं तेजोराशिं जगद्गुरुम् ।
सर्वकल्याणदातारं गुरुमावाहयाम्यहम् ॥
अस्यां प्रतिकृतौ भगवन्तं श्रीरमणं ध्यायाम्यावाहयामि ॥

अनेकरत्नखचितं मुक्तामणिविभूषितम् ।
स्वर्णसिंहासनं चारु रमणेशानुगृह्यताम् ॥
श्रीरमणभगवते नमः रत्नसिंहासनं समर्पयामि ॥

गङ्गादिसर्वतीर्थेभ्य आहृतं विमलं जलम् ।
रमणेश सुखस्पर्शं पाद्यार्थमुपयुज्यताम् ॥
श्रीरमणभगवते नमः पादयोः पाद्यं समर्पयामि ॥

अनर्घगुणजालाय सर्वसिद्धिविधायिने ।
आजानुबाहवे तुभ्यमिदमर्घ्यं मयाऽर्पितम् ॥
श्रीरमणभगवते नमः हस्तयोः अर्घ्यं समर्पयामि ॥
अफेनिलमिदं शीतं सुवर्णकलशस्थितम् ।
तोयमाचम्यतां देव रमणेशार्पितं मया ॥
श्रीरमणभगवते नमः आचमनीयं समर्पयामि ॥

दधिक्षीरघृतोपेतं शर्करामधुसंयुतम् ।
मधुपर्कं गृहाणेमं महनीय महागुरो ! ॥
श्रीरमणभगवते नमः मधुपर्कं समर्पयामि ॥

अरुणाद्रिदरीवास करुणामयविग्रह ! ।
पञ्चामृतस्नानमिदं स्वीकुरुष्व जगद्गुरो ॥
श्रीरमणभगवते नमः पञ्चामृतस्नानं समर्पयामि ॥

गङ्गादिपुण्यतीर्थेभ्यस्समानीतमिदं जलम् ।
स्नानार्थमुपक्लृप्तं ते गृह्यतां रमणप्रभो ॥
श्रीरमणभगवते नमः शुद्धोदकस्नानं समर्पयामि ॥

क्षौमं पीतांबरं दिव्यं देवतार्हं सुमङ्गलम् ।
गृह्यतां देवदेवेश भक्त्या परमयाऽर्पितम् ॥
श्रीरमणभगवते नमः वस्त्रं समर्पयामि ॥

राजतं ब्रह्मसूत्रं च काञ्चनश्चोत्तरीयकम् ।
गृहीत्वा रमणेशान त्राहि मां भवसागरात् ॥
श्रीरमणभगवते नमः यज्ञोपवीतं समर्पयामि ॥

सुगन्धिचन्दनं दिव्यं श्रीखण्डोत्थं मनोहरम् ।
कर्पूरकुङ्कुमोपेतं रमण प्रतिगृह्यताम् ॥
श्रीरमणभगवते नमः परिमलगन्धान् धारयामि ॥

अक्षतान् धवलान् दिव्यान् शालीयांस्तण्डुलान् शुभान् ।
हरिद्राचूर्णसंयुक्तान् संगृहाणारुणेश्वर ॥
श्रीरमणभगवते नमः गन्धस्योपरि अक्षतान् समर्पयामि ॥

सुगन्धीनि सुपुष्पाणि जातीकुन्दमुखानि च ।
मालतीवकुलादीनि पूजार्थं प्रतिगृह्यताम् ॥
श्रीरमणभगवते नमः पुष्पमालां समर्पयामि ॥
पुष्पाणि पूजयामि ।

अथाङ्गपूजा ॥

| | | |
|---|---|---|
| पूज्यपादाय नमः | पादौ | पूजयामि |
| गूढगुल्फाय नमः | गुल्फौ | ,, |
| पाराशर्याय नमः | जानुनी | ,, |
| परमाचार्याय नमः | जंघे | ,, |
| पाशमोचकाय नमः | कटिं | ,, |
| परमार्थज्ञाय नमः | नाभिं | ,, |

| | |
|---|---|
| आवर्तक्षेत्रजाताय नमः | पार्श्वे पूजयामि |
| भूमिहृदयक्षेत्रगाय नमः | हृदयम् ,, |
| श्रीकण्ठाय नमः | कण्ठम् ,, |
| चिन्मुद्रिणे नमः | करौ ,, |
| वाग्मिने नमः | वाचम् ,, |
| सुरदनाय नमः | दन्तान् ,, |
| सुप्रसन्नाय नमः | मुखम् ,, |
| मौनिने नमः | जिह्वां ,, |
| विशालाक्षाय नमः | नेत्रे ,, |
| सुललाटाय नमः | ललाटम् ,, |
| रमणाय नमः | शिरः ,, |
| सर्वात्मने नमः | सर्वाङ्गम् ,, |

(अनन्तरं श्रीरमणाष्टोत्तरशतसहस्रनामार्चनं यथाशक्ति कार्यम्)

वनस्पतिरसो दिव्यः गन्धाढ्यस्सुमनोहरः।
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥

श्रीरमणभगवते नमः धूपमाघ्रापयामि।

ज्योतिषां त्वं परं ज्योतिस्तेजस्त्वं तेजसामपि।
आत्मज्योतिरिदं दीपज्योतिरस्तु तवानघ॥

श्रीरमणभगवते नमः दीपं संदर्शयामि।

धूपदीपानन्तरमाचमनीयं समर्पयामि।

## ॥ नैवेद्यम् ॥

भूर्भुवस्वः....प्रसुव। श्रीरमण....नमः

अमृतोपस्तरणमसि स्वाहा....प्राणाय स्वाहा....समानाय स्वाहा

मधु मधु मधु।

नैवेद्यं षड्रसोपेतं भक्ष्यभोज्यं चतुर्विधम्।

सघृतं सफलं देव गृह्यतां रमणेश्वर ! ॥

श्रीरमणभगवते नमः नैवेद्यं समर्पयामि ।
मध्ये मध्ये पानीयं समर्पयामि । हस्तप्रक्षालनं समर्पयामि ।
पादप्रक्षालनं समर्पयामि । नैवेद्यानन्तरं आचमनीयं समर्पयामि ।

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् ।
कर्पूरचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥

श्रीरमणभगवते नमः दिव्यतांबूलं समर्पयामि ।

सौवर्णी राजतीं ताम्रां नानारत्नसमन्विताम् ।
पूजासाद्गुण्यसिद्ध्यर्थं दक्षिणामर्पयाम्यहम् ॥

श्रीरमणभगवते नमः स्वर्णपुष्पदक्षिणां समर्पयामि ।

चन्द्रादित्यौ च धरणिर्विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि भज नीराजनं प्रभो ॥

श्रीरमणभगवते नमः कर्पूरनीराजनं समर्पयामि ।
नीराजनानन्तरं आचमनीयं समर्पयामि ।
ततः पुष्पाञ्जलिं समर्पयामि ।

## प्रदक्षिणम् ॥

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे ॥

नमस्ते रमणेशान नमस्ते मुनिकुञ्जर ।
नमस्ते करुणामूर्ते नमस्ते सर्वसिद्धिद ॥

श्रीरमणभगवते नमः अनन्तकोटिप्रदक्षिणनमस्कारान् समपयामि ।

त्वद्भक्तिगन्धसंयुक्तं त्वत्कृपाकाङ्क्षयायुतम् ।
मनःपुष्पाञ्जलिं तुभ्यं गृहाण रमणार्पितम् ॥

श्रीरमणभगवते नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ।

## प्रार्थना ॥

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत्सर्वं दयया नाथ गृहाणाराधनं मम ॥

जगतां नायकस्वामिन् देशिकस्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥

ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं पुरा ।
तव कृत्यमिति ज्ञात्वा क्षमस्व रमणप्रभो ॥

एवं क्षमापणं प्रार्थ्य श्रीरमणं स्वस्मिन्विलीनं भावयेत् ।

हृत्पद्मकर्णिकामध्ये ज्ञानेन सह सद्गुरो ।
प्रविश त्वं महायोगिन् सर्वैर्भक्तगणैस्सह ॥ इति ।

मया कृतमिदं श्रीरमणभगवत्पूजाख्यं कर्म सर्वं श्रीब्रह्मार्पणमस्तु ।

ओं तत् सत् ।

ब्राह्मणेभ्य उपायनदानं । घण्टादेवतानिवेदनम् ।

इति श्रीरमणभगवत्पूजाविधानं संक्षिप्तं समाप्तम् ।

श्रीः

## ॥ श्रीरमणसहस्रनामस्तोत्रप्रारंभः ॥

---

देव्युवाच—

भगवन्सर्वशास्त्रार्थपरिज्ञानवतां वर ।
अरुणेशस्य माहात्म्यं त्वत्तो विस्तरशः श्रुतम् ॥ १ ॥

तन्नाम्नामपि साहस्रं सर्वपापहरं नृणां ।
अरुणेशावतारस्य रमणस्य महात्मनः ॥ २ ॥

इदानीं श्रोतुमिच्छामि तस्य नामसहस्रकं ।
यस्य संकीर्तनान्मर्त्यो विमुक्तिं विन्दते ध्रुवम् ॥ ३ ॥

त्वन्तु सर्वं विजानासि नान्यस्त्वत्तोऽस्य वेदिता ।
तस्मात्कारुण्यतो मह्यं भक्तिमत्यै विशेषतः ॥ ४ ॥

नाम्नां सहस्रं दिव्यानां रमणस्य मुनीशितुः ।
रहस्यमपि वक्तव्यं त्वया गौतम ! सुव्रत ! ॥ ५ ॥

गौतमउवाच—

साधु साधु महाभागे ! प्रश्न एषजगद्धितः ।
वक्ष्ये तच्छ्रद्धयोपेता सावधानमनाः शृणु ॥ ६ ॥

ज्ञानं वेदान्तसंजातं साक्षान्मोक्षस्य साधनं ।
कर्मोपास्त्यादि तद्भिन्नं ज्ञानद्वारैव मुक्तिदम् ॥ ७ ॥

निष्कामकर्मशुद्धानां विवेकादिमतां नृणां ।
जायते तच्च विज्ञानं प्रसादादेव सद्गुरोः ॥ ८ ॥

ज्ञानसाधननिष्ठत्वं ज्ञानाभ्यासं विदुर्बुधाः ।
तारतम्येन भिद्यन्ते ज्ञानाभ्यासाधिकारिणः ॥ ९ ॥

विचारमात्रनिष्ठस्य मुख्या ज्ञानाधिकारिता ।
विचारी दुर्लभो लोके विचारो दुष्करो यतः ॥ १० ॥

मुमुक्षवो नरास्सर्वे ज्ञानाभ्यासेऽधिकारिणः ।
स्त्रीशूद्राणां तथान्येषां नाधिकारोविगर्हितः ॥ ११ ॥
देशभाषान्तरेणापि तेषां सोप्युपकारकः ।
ज्ञानस्य च विचारोऽयं सन्निकृष्टं हि साधनम् ॥ १२ ॥
विचारभिन्नमार्गाश्च न साक्षात्ज्ञानसिद्धये ।
विचारजननद्वारेत्याहुर्वेदान्तवेदिनः ॥ १३ ॥
योगोपास्त्यादयोऽन्ये सन्ति विज्ञानहेतवः ।
तदालंबो भवत्येव विचारानधिकारिणाम् ॥ १४ ॥
योगोपास्त्याद्यशक्तानां जपस्तुत्यादिकीर्तनं ।
ज्ञानोपायोभवत्येव जिज्ञासानुष्ठितं यदि ॥ १५ ॥
तस्मादयत्नतोज्ञानं सर्वेषां येन हेतुना ।
तादृशं नामसाहस्रं रमणस्य महात्मनः ॥ १६ ॥
त्वयि प्रीत्यैव वक्ष्यामि हिताय जगतां शृणु ।
नाभक्ताय प्रदातव्यमिदं मोक्षसुखप्रदम् ॥ १७ ॥

अस्य श्रीरमणदिव्यसहस्रनामस्तोत्रमहामन्त्रस्य । गौतमो ऋषिः । अनुष्टुप्छन्दः । श्रीरमणपरमात्मादेवता । ऐं बीजं । ह्रीं शक्तिः । श्रीं कीलकं । "श्रीरमणाय नमः" इति मन्त्रप्रत्येकवर्णेन हृदयादि न्यासः । ओं भूर्भुवस्स्वरोमिति दिग्बन्धः ।

## ध्यानम् ॥

ध्यायेच्छारदचन्द्रसुन्दरमुखं ताम्रारविन्देक्षणं
भक्ताभीष्टवराभयप्रदकरं कौपीनमात्रोज्ज्वलम् ।
स्वात्मानन्दरसानुभूतिविवशं सर्वानवद्याङ्गकं
श्रीमन्तं रमणेश्वरं गुरुवरं योगासनाध्यासितम् ॥
अरुणजलजनेत्रं मुग्धमन्दस्मितास्यं
तरुणतपनभासं पूर्णबोधप्रसादम् ।
अरुणशिखरिसानुप्राङ्गणे सञ्चरन्तं
रमणमरुणमूर्तिं चिन्तयेदिष्टसिद्ध्यै ॥

ॐ

अरुणेशमहाशक्तिनिपातप्रतिबोधितः ।
अचिन्त्यपरनिर्वाणस्थितिरव्यक्तशक्तिकः ॥ १ ॥
अनभ्यासश्रमावाप्तसमस्तनिगमागमः ।
अरुणाचलनाथीयपञ्चरत्नप्रकाशकः ॥२ ॥
अनाहतान्यहृदयस्थानबोधनपण्डितः ।
अकारादिक्षकारान्तमातृकामन्त्रमालिकः ॥ ३ ॥
अन्तर्गतमहाशक्तिरणिमादिगुणान्वितः ।
अभ्यासातिशयज्ञात अत्याश्चर्यचरित्रकः ॥ ४ ॥
अतिवर्णाश्रमाचारोऽचिन्त्यशक्तिरमोघदृक् ।
अङ्गावन्त्यादिदेशीयमुमुक्षुजनताश्रयः ॥ ५ ॥
अन्तर्मुखोऽन्तराराम अन्तर्यास्यहमर्थदृक् ।
अहमर्थैकलक्ष्यार्थ अरुणाद्रिमयोऽरुणः ॥ ६ ॥
अपीतांबाङ्गनिर्माल्यपयःपानैकजीवितः ।
अध्यात्मयोगनिलय अदीनात्माऽघमर्षणः ॥ ७ ॥
अकायो भक्तकायस्थः कालचक्रप्रवर्तकः ।
अक्षिपेयामृतांभोधिराह्वयैश्वर्यदायकः ॥ ८ ॥
आजानुबाहुरक्षोभ्य आत्मवाननसूयकः ।
आवर्तक्षेत्रसञ्जात आर्तरक्षणतत्परः ॥ ९ ॥
इतिहासपुराणज्ञ इष्टापूर्तफलप्रदः ।
इडापिङ्गलिकामध्य-सुषुम्नाग्रन्थिभेदकः ॥ १० ॥
इडापिङ्गलिकामध्य-सुषुम्नामध्यभासुरः ।
इष्टार्थदाननिपुण इन्द्रभोगविरक्तधीः ॥ ११ ॥
ईशान ईषणाहीनः ईतिबाधाभयापहः ।
उपास्यमूर्तिरुत्साहसंपन्न उरुविक्रमः ॥ १२ ॥
उदासीनवदासीन उत्तमज्ञानदेशिकः ।
ऊर्ध्वरेता ऊर्ध्वगति रुटजस्थ उदारधीः ॥ १३ ॥

ऋषीऋषिगणस्तुत्यो ऋजुबुद्धी ऋजुप्रियः ।
ऋतंभरो ऋतप्रज्ञो ऋजुमार्गप्रदर्शकः ॥ १४ ॥
एवमित्यविनिर्णेयः एनःकूटविनाशनः ।
ऐश्वर्यदाननिपुण औदार्यगुणमण्डितः ॥ १५ ॥
ओंकारपदलक्ष्यार्थ औपम्यपरिवर्जितः ।
कटाक्षस्यन्दिकरुणः कटिबद्धालमल्लकः ॥ १६ ॥
कमनीयचरित्राढ्यः कर्मवित्कविपुङ्गवः ।
कर्माकर्मविभागज्ञः कर्मलेपविवर्जितः ॥ १७ ॥
कलिदोषहरः कम्रः कर्मयोगप्रवर्तकः ।
कर्मन्दिप्रवरः कल्यः कल्याणगुणमण्डितः ॥ १८ ॥
कान्तिपत्तनसन्दृष्टारुणज्योतिःप्रहर्षितः ।
कामहन्ताकान्तमूर्तिः कालात्माकालसूत्रहृत् ॥ १९ ॥
कांक्षाहीनः कालकांक्षी काशीवासफलप्रदः ।
काश्मीरदेश्यसेव्यांघ्रिर्नैकालीयसमर्चितः ॥ २० ॥
कामकारनिराकर्ता कृतकृत्यत्वकारकः ।
काव्यकण्ठसुधीदृष्टकार्तिकेयस्वरूपधृक् ॥ २१ ॥
किङ्करीकृतभूपालः कीर्तिमान्कीर्तिवर्द्धनः ।
कुमारः कुतलामोदः कुकुटुम्बी कुलोद्गतः ॥ २२ ॥
कुष्ठापस्माररोगघ्नः कुसुमारामनिष्ठितः ।
कृपालुः कृपणालम्बः कृशानुसदृशः कृशः ॥ २३ ॥
केरलान्ध्रादिभाषाज्ञः केरलान्ध्रजनेडितः ।
कैवल्यपदनिश्श्रेणिः कैवल्यसुखदायकः ॥ २४ ॥
कोहं नाहं सोहमिति स्वात्मान्वेषणमार्गदृक् ।
कोहंविमर्शब्रह्मास्त्र-नाशिताशेषविभ्रमः ॥ २५ ॥
कोशालयप्रतिष्ठाता कोशवान्कोशवीक्षिता ।
क्षमावान्क्षिप्रसन्तुष्टः क्षपिताशेषकल्मषः ॥ २६ ॥

क्षतकर्माक्षताविद्यः क्षीणभक्तजनावनः ।
क्षामनाशी क्षुधाहीनः क्षुद्रघ्नः क्षितिमण्डनम् ॥ २७ ॥
क्षेत्रज्ञः क्षेमदः क्षेमः क्षेमार्थिजनवन्दितः ।
क्षेत्राटनपरिश्रान्तभक्तक्षिप्रप्रसादनः ॥ २८ ॥
क्ष्म्रौंमन्त्रबीजतत्वज्ञः क्षेत्राजीवफलप्रदः ।
गंभीरो गर्वितोगर्वविहीनो गर्वनाशनः ॥ २९ ॥
गद्यपद्यप्रियोगस्थो गायत्रीमन्त्रबोधितः ।
गिरिशो गीष्पतिर्गुण्यो गुणातीतोगुणाकरः ॥ ३० ॥
गृहीगृहविनिर्मुक्तो ग्रहातिग्रहसंजयी ।
गीतोपदेशसारादिग्रन्थकृद्ग्रन्थिभेदकः ॥ ३१ ॥
गुरुमूर्ततपोनिष्ठः नैसर्गिकसुहृद्वरः ।
गृहिमुक्त्यधिकारित्वव्यवस्थापनतत्परः ॥ ३२ ॥
गोविन्दो गोकुलत्राता गोष्ठीवान्गोधनान्वितः ।
चराचरहितश्चक्षुरुत्सवश्चतुरश्चलः ॥ ३३ ॥
चतुर्वर्गचतुर्भद्रप्रदश्चरमदेहभृत् ।
चाण्डालचटकश्वाऽहि-किटिकीशहितंकरः ॥ ३४ ॥
चित्तानुवर्ती चिन्मुद्री चिन्मयश्चित्तनाशकः ।
चिरन्तनश्चिदाकाशश्चिन्ताहीनश्चिदूर्जितः ॥ ३५ ॥
चोरहा चोरदृक् चोरचपेटाघातनन्दितः ।
छलच्छद्मवचोहीनश्शत्रुजिच्छत्रुतापनः ॥ ३६ ॥
छन्नाकारश्छान्दसेड्यश्छिन्नकर्मादिबन्धनः ।
छिन्नद्वैधश्छिन्नमोहश्छिन्नहृच्छिन्नकल्मषः ॥ ३७ ॥
जगद्गुरुर्जगत्प्राणो जगदीशो जगत्प्रियः ।
जयन्तीजोजन्महीनो जयदो जनमोहनः । ॥ ३८ ॥
जाग्रत्स्वप्नसुषुप्त्यादिसाक्षी जाड्यविनाशकः ।
जातिवर्णभिदाशून्यो जितात्मा जितभूतकः ॥ ३९ ॥

जितेन्द्रियो जितप्राणो जितान्तश्शत्रुसञ्चयः ।
जीवब्रह्मैक्यविज्जीवन्मुक्तो जीवत्वनाशकः ॥ ४० ॥

ज्योतिर्लिंगमयज्योतिस्समलोष्टाश्मकाञ्चनः ।
जेता ज्यायाञ्ज्ञानमूर्तिर्ज्ञानी ज्ञानमहानिधिः ॥ ४१ ॥

ज्ञानज्ञातृज्ञेयरूपत्रिपुटीभावनोज्झितः ।
ज्ञातसर्वागमो ज्ञानगम्यो ज्ञातेयसन्नुतः ॥ ४२ ॥

ज्ञानविज्ञानतृप्तात्मा ज्ञानसंच्छिन्नसंशयः ।
ज्ञानाग्निदग्धकर्मा च ज्ञानोपायप्रदर्शकः ॥ ४३ ॥

ज्ञानयज्ञविधिप्रीतो ज्ञानावस्थितमानसः ।
ज्ञाताज्ञातान्यचिन्मात्रं ज्ञानवृद्धोपलालितः ॥ ४४ ॥

तत्वज्ञस्तत्वविन्नेता तत्वमस्यादिलक्षितः ।
तत्वभाषणसन्तुष्टस्तत्वबोधकदेशिकः ॥ ४५ ॥

तत्पदार्थैकसंलीनस्तत्वान्वेषणतत्परः ।
तपनस्तपनीयाङ्गस्तमस्सन्तापचन्द्रमाः ॥ ४६ ॥

तपस्वी तापसाराध्यस्तपःक्लिष्टतनूरुहः ।
तपस्तत्वार्थसारज्ञस्तपोमूर्तिस्तपोमयः ॥ ४७ ॥

तपोबलसमाकृष्टभक्तसंघसमावृतः ।
तापत्रयाग्निसन्तप्तजनसञ्जीवनामृतम् ॥ ४८ ॥

तातादेशात्तशोणाद्रिस्तातारुणमहेश्वरः ।
तातान्तिकसमागन्ता तातान्वेषणतत्परः ॥ ४९ ॥

तितिक्षुस्तीर्थवित्तीर्थं तुरीयस्तुष्टमानसः ।
तुल्यनिन्दास्तुतिस्तूष्णींशीलस्तृष्णाविवर्जितः ॥ ५० ॥

तेजस्वीत्यक्तविषयस्त्रयीभावार्थकोविदः ।
त्रिदिवेशसुखोपास्यस्त्रिवर्गः स्त्रिगुणात्मकः ॥ ५१ ॥

त्रैलोक्यबुधसंपूज्यस्त्रैलोक्यग्रासबृंहितः ।
त्रैलोक्यसृष्टिस्थितिकृत्त्रैगुण्यविषयोज्झितः ॥ ५२ ॥

त्रैगुण्यविषवेगघ्नो दक्षो दग्धवपुर्धरः ।
दर्शनीयो दयामूर्तिर्दक्षिणास्यो दमान्वितः ॥ ५३ ॥

दण्डभृक् दण्डनीतिस्थो दक्षिणो दंभवर्जितः ।
दहराकाशमध्यस्थ चिदाकाशप्रतिष्ठितः ॥ ५४ ॥

दशदिक्पालसंपूज्यो दशदिग्व्यापिसद्यशाः ।
दक्षिणद्वीपविख्यातो दाक्षिणात्यकलाकविः ॥ ५५ ॥

दारिद्र्यध्वंसको दान्तो दारितक्लेशसन्ततिः ।
दासीदासभरो दिव्यो दिष्ट्याबुद्धो दिगंबरः ॥ ५६ ॥

दीर्घदर्शी दीप्यमानो दीनबन्धुर्दृगात्मकः ।
दुर्विगाह्यो दुराधर्षो दुराचारनिवर्तकः ॥ ५७ ॥

दृग्दृश्यभेदधीशून्यो दर्शनं दृतखण्डकः ।
दैववन्द्यो देवतेशो दोषज्ञो दोषनाशनः ॥ ५८ ॥

द्वादशार्णमनुध्येयो द्वादशान्तस्थलस्थितः ।
दैविको द्राविडो द्वीपान्तरविख्यातवैभवः ॥ ५९ ॥

द्वितीयातिथिसंभूतो द्वैतभावविमुक्तधीः ।
द्वैताद्वैतमतातीतो द्वैतसन्तमसापहः ॥ ६० ॥

धनदो धर्मसूक्ष्मज्ञो धर्मराट् धार्मिकप्रियः ।
धाता धातृसमश्रीको धातुशुद्धिविधायकः ॥ ६१ ॥

धारणाशक्तिमान्धीरो धुरीणो धृतिवर्द्धनः ।
धीरोदात्तगुणोपेतो ध्याननिष्ठो ध्रुवस्मृतिः ॥ ६२ ॥

नमज्जनोद्धारणकृन्नरवाहनसन्निभः ।
नवनीतसमस्वान्तो नतसाधुजनाश्रयः ॥ ६३ ॥

नरनारीगणोपेतो नगसानुकृताश्रमः ।
नममेत्यव्ययुतो नवीनो नष्टमानसः ॥ ६४ ॥

नयनानन्ददो नम्यो नामोच्चारणमुक्तिदः ।
नागस्वाम्यनुजो नागसुन्दरज्येष्ठतां गतः ॥ ६५ ॥

नादबिन्दुकलाभिज्ञो नादब्रह्मप्रतिष्ठितः ।
नादप्रियो नारदादिपूज्यो नामविवर्जितः ॥ ६६ ॥

नामी नामजपप्रीतो नास्तिकत्वविघातकृत् ।
नासाग्रन्यस्तदृङ् नामब्रह्मातीतो निरञ्जनः ॥ ६७ ॥

निरञ्जनाश्रयो नित्यतृप्तो निश्श्रेयसप्रदः ।
निर्यत्नसिद्धनित्यश्रीर्नित्यसिद्धस्वरूपदृक् ॥ ६८ ॥

निर्ममो निरहंकारो निरवद्यो निराश्रयः ।
नित्यानन्दो निरातङ्को निष्प्रपञ्चो निरामयः ॥ ६९ ॥

निर्मलो निश्चलो नित्यो निर्मोहो निरुपाधिकः ।
निस्सङ्गो निगमस्तुत्यो निरीहो निरुपप्लवः ॥ ७० ॥

नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरन्तरः ।
निर्विकारो निर्गुणात्मा निष्पापो निष्परिग्रहः ॥ ७१ ॥

निर्भवो निस्तुलो निघ्नो निजानन्दैकनिर्भरः ।
निग्रहानुग्रहसमो निकृतिज्ञो निदानवित् ॥ ७२ ॥

निर्ग्रन्थो निर्नमस्कारो निस्तुतिर्निरयापहः ।
निर्वासनो निर्व्यसनो निर्योगक्षेमचिन्तनः ॥ ७३ ॥

निर्बीजध्यानसंवेद्यो निर्वादो निश्शिरोरुहः ।
पञ्चाक्षरमनुध्येयः पञ्चपातकनाशनः ॥ ७४ ॥

पञ्चस्कन्धीमताभिज्ञः पञ्चकोशविलक्षणः ।
पञ्चाग्निविद्यामार्गज्ञः पञ्चकृत्यपरायणः ॥ ७५ ॥

पञ्चवक्त्रः पञ्चतपाः पञ्चताकारणोद्धरः ।
पञ्चोपचारसंपूज्यः पञ्चभूतविमर्दनः ॥ ७६ ॥

पञ्चविंशतितत्त्वात्मा महापञ्चदशाक्षरः ।
पराशरकुलोद्भूतः पण्डितः पण्डितप्रियः ॥ ७७ ॥

परमेष्ठी परेशानः परिपूर्णः परात्परः ।
परंज्योतिः परंधाम परमात्मा परायणम् ॥ ७८ ॥

पतिव्रताभीष्टदायी पर्यङ्कस्थः परार्थवित् ।
पवित्रपादः पापारिः परार्थैकप्रयोजनः ॥ ७९ ॥

पालीतीर्थतटोल्लासी पाश्चात्यद्वीपविश्रुतः ।
पिता पितृहितः पित्तनाशकः पितृमोचकः ॥ ८० ॥

पितृव्यान्वेषितः पीनः पातालेशालयस्थितः ।
पुनर्वसूदितः पुण्यः पुण्यकृत्पुरुषोत्तमः ॥ ८१ ॥

पुन्नागतरुवत्क्षेत्री पुण्यापुण्यविवर्जितः ।
पूतात्मा पृथुकप्रीतः पृथुदश्च पुरोहितः ॥ ८२ ॥

प्रतिमाकृतसान्निध्यः प्रतिग्रहपराङ्मुखः ।
प्रमादिवत्सरोद्भूतः प्रकृतिस्थः प्रमाणवित् ॥ ८३ ॥

प्रतीकोपास्तिविषयः प्रत्युत्तरविचक्षणः ।
प्रत्यक् प्रशान्तः प्रत्यक्षः प्रश्रितः प्रतिभानवान् ॥ ८४ ॥

प्रदक्षिणप्रीतमनाः प्रवालाद्रिसमाश्रयः ।
प्राच्यप्रतीच्यदेशीय विबुधाग्रण्यवन्दितः ॥ ८५ ॥

प्रस्थानभेदसंबोद्धयः प्रांशुः प्राणनिरोधकः ।
प्रसूतिदिनवृद्धश्री दर्शितज्योतिराकृतिः ॥ ८६ ॥

प्रार्थितार्थप्रदः प्राज्ञः प्रावारकनिगूहितः ।
प्रातस्स्वर्तव्यचारित्रः प्राप्तप्राप्तव्यनिर्वृतः ॥ ८७ ॥

प्रायणस्मृतिसंप्राप्यः प्रियहीनः प्रियंवदः ।
प्रेक्षावान्प्रेष्यरहितः फलभूतः फलप्रदः ॥ ८८ ॥

बहुश्रुतो बहुमतो बहुपाकी बहुप्रदः ।
बलवान्बन्धुमान्बालरूपो बाल्यविचेष्टितः ॥ ८९ ॥

बालभानुप्रतीकाशो बालसन्यासिशब्दितः ।
ब्रह्मचर्यतपोयोगश्रुतप्रज्ञासमन्वितः ॥ ९० ॥

ब्रह्मण्यो ब्रह्मविद्ब्रह्म ब्रह्मसायुज्यदायकः ।
ब्रह्मार्पितमनोबुद्धिर्ब्राह्मणस्वामिनामकः ॥ ९१ ॥

ब्रह्मासनस्थितो ब्रह्मसूत्रविद्भगवान्भवः।
भयकृद्भयसंहर्ता भवादो भक्तभावितः॥ ९२॥
भारूपो भावनाग्राह्यो भावज्ञो भाग्यवर्द्धनः।
भारतीयमहाभाग्यं भारतख्यातिपोषकः॥ ९३॥
भारतोद्यद्ज्ञानदीपो भावनाभेदकृन्तनः।
भिदाशून्यो भिदाध्वंसी भावुको भिक्षुकेश्वरः॥ ९४॥
भूतिदो भूतिकृद्भूमि नाथपूर्णांशसंभवः।
भौमब्रह्म भ्रमध्वंसी भूमिहृत्क्षेत्रलक्षितः॥ ९५॥
भूतिभूषितसर्वाङ्गो मङ्गलो मङ्गलप्रदः।
मनोबुद्धिरहंकारः प्रकृतिश्च परः पुमान्॥ ९६॥
महाशक्तिर्महासिद्धिर्महोदारो महाद्युतिः।
महाकर्ता महाभोक्ता महायोगी महामतिः॥ ९७॥
महामान्यो महाभागो महासेनमहांशजः।
मर्यादाकृन्महादेवो महोरूपी महायशाः॥ ९८॥
महोद्यमो महोत्साहो ममताग्रहपीडनः।
महामन्त्रो महायन्त्रो महावाक्योपदेशकः॥ ९९॥
महावाक्यार्थतत्त्वज्ञो महामोहनिवारकः।
मायावी मानदो मानी मातृमुक्तिविधायकः॥ १००॥
मानावमानसाम्यात्मा मालूराधस्तपस्स्थितः।
मधूकद्रुतलस्थायी मातृमान्मातृभक्तिमान्॥ १०१॥
मात्रालयप्रतिष्ठाता मार्गितो मार्गबान्धवः।
मार्गणीयो मार्गदर्शी मार्गशीर्षकृतोदयः॥ १०२॥
मार्गितात्मा मार्गशून्यो मितभुञ्जितसञ्ज्वरः।
मितस्वप्नावबोधश्च मिथ्याबाह्यनिरीक्षकः॥ १०३॥
मुनिर्मुक्तो मुक्तिदायी मेधावी मेध्यभोजनः।
मौनव्याख्यानकृन्मौनी मौनभाषाविशारदः॥ १०४॥

मौनामौनद्वयातीतो मौनदो मौनिषु प्रियः ।
यज्ञकृद्यज्ञभुग्यज्ञो यजमानो यथार्थवित् ॥ १०५ ॥
यतात्मा यतिसंपूज्यो यमिप्राप्यो यशस्करः ।
यमाद्यष्टाङ्गयोगज्ञो यजुश्शाखी यतीश्वरः ॥ १०६ ॥
यवनानुग्रहकरो यक्षो यमनिषूदनः ।
यात्राविरहितो यानाऽनारूढो याज्ञिकप्रियः ॥ १०७ ॥
यातनानाशनो याच्ञाहीनो याचितदायकः ।
युक्तकृद्युक्तभुग्युक्त स्वप्नबोधो युगादिकृत् ॥ १०८ ॥
योगीशो योगपुरुषो योगतत्त्वविवेचकः ।
योगासनो योगभूमि समारोहणसाधकः ॥ १०९ ॥
योगिगम्यो योगफलं योगभ्रष्टशुभप्रदः ।
योगप्रशंसी योगस्थो योगक्षेमधुरन्धरः ॥ ११० ॥
रक्षको रमणो रम्यो रमणीयाङ्गसंहतिः ।
रमेशक्लेशसन्दष्टज्योतिरक्लेशदर्शनः ॥ १११ ॥
रजोपहो रजोमूर्तो रसिको रसशेवधिः ।
रहस्यो रञ्जनो रंस्यो रत्नगर्भो रसोदयः ॥ ११२ ॥
राजविद्यागुरू राज विद्याविद्राजमानितः ।
राजसाहारनिर्मुक्तो राजसज्ञानदूरगः ॥ ११३ ॥
रागद्वेषविनिर्मुक्तो रसालाश्रमकोकिलः ।
रामाभिरामो राजश्रीः राजा राज्यहितङ्करः ॥ ११४ ॥
राजभोगप्रदो राष्ट्रभाषाविद्राजवल्लभः ।
रुदितद्वेषणो रुद्रो लक्ष्मीवान्लक्ष्मिवर्द्धनः ॥ ११५ ॥
लज्जालुर्ललितो लब्धलब्धव्यो लघुसिद्धिदः ।
लयविलुब्धकामौघो लाभालाभसमाशयः ॥ ११६ ॥
लयाधिष्ठानतत्त्वज्ञो लयपूर्वसमाधिमान् ।
लास्यप्रियो लिङ्गरूपी लिङ्गोत्थो लिङ्गवर्जितः ॥ ११७ ॥

लिपिलेखचणो लोकशिक्षको लोकरक्षकः ।
लोकायतमताभिज्ञो लोकवार्ताविवर्जितः ॥ ११८ ॥
लोकोदासीनभावस्थो लोकोत्तरगुणोत्तरः ।
लोकाध्यक्षो लोकपूज्यो लोकासारत्वबोधकः ॥ ११९ ॥
लोकाकर्षणशक्तात्मशक्तिमत्कान्तपर्वतः ।
लोकानुत्सादको लोकप्रमाणं लोकसंग्रही ॥ १२० ॥
लोकबोधप्रकाशार्थं शोणोद्यत्ज्ञानभास्करः ।
वरिष्ठो वरदो वक्ता वङ्गदेश्यजनाश्रयः ॥ १२१ ॥
वन्दारुजनमन्दारो वर्तमानैककालवित् ।
वनवासरसाभिज्ञो वलित्रयविभूषितः ॥ १२२ ॥
वसुमान्वस्तुतत्त्वज्ञो वन्द्यो वत्सतरीप्रियः ।
वर्णाश्रमपरित्राता वर्णाश्रममतातिगः ॥ १२३ ॥
वाक्यज्ञो वाक्यकुशलो वाङ्मनोबुद्ध्यगोचरः ।
वाद्यगीतप्रियो वाजश्रवा वापीप्रतिष्ठकः ॥ १२४ ॥
वाहनागारनिष्ठावान्वाजिमेधफलप्रदः ।
वक्षोदक्षिणभागस्थ हृदयस्थानदर्शकः ॥ १२५ ॥
वचद्भूमन्त्रसंसेव्यो विचारैकोपदेशकृत् ।
विचारमात्रनिरतो विवेकिजनतादृतः ॥ १२६ ॥
विदितात्मा विधेयात्मा विस्मितेशादिवीक्षितः ।
विरूपाक्षगुहावासी विश्वात्मा विश्वभुग्विभुः ॥ १२७ ॥
विविक्तसेवी विघ्नेशचैत्यप्राकारसंस्थितः ।
विघ्यदृष्टमहोदर्शी विज्ञानानन्दसुन्दरः ॥ १२८ ॥
विघसाशी विशुद्धात्मा विपर्यासनिरासकः ।
विभूतिसितफालाढ्यो विरोधोक्तिविनाकृतः ॥ १२९ ॥
विश्वंभरो विश्ववैद्यो विश्वास्यो विस्मयान्वितः ।
वीणागेयो वीतमायो वीर्यवान्वीतसंशयः ॥ १३० ॥

वृद्धिह्रासविनाभूतो वृद्धो वृत्तिनिरोधकः ।
वृत्तिदो वृत्तिबोधेद्धो वेणुवाद्यवशंवदः ॥ १३१ ॥
वेदवेदान्ततत्त्वज्ञो वेषदोषप्रकाशकः ।
व्यक्ताव्यक्तस्वरूपज्ञो व्यंग्यवाक्यप्रयोगवित् ॥ १३२ ॥
व्यासाखिलो व्यवस्थाकृद्व्यवसायविबोधकः ।
वैज्ञानिकाग्रणीर्वैश्वानरो व्याघ्राजिनस्थितः ॥ १३३ ॥
शरण्यश्शर्मदश्शक्ति पातबुद्धश्शमान्वितः ।
शरीरिवद्भासमानश्शर्मण्यजनवन्दितः ॥ १३४ ॥
शास्त्रजालमहारण्य वृथाटननिषेधकः ।
शास्त्राभ्यासफलीभूत ज्ञानविज्ञानतत्परः ॥ १३५ ॥
शास्त्रोल्लंघनविद्वेषी शास्त्रमार्गाविलंघनः ।
शान्तात्मा शान्तिदश्शान्तिघनश्शान्तोपदेशकः ॥ १३६ ॥
शाण्डिल्योपास्तिलक्ष्यार्थश्शास्त्रयोनिः प्रजापतिः ।
शिवंकरश्शिवतमश्शिष्टेष्टश्शिष्टपूजितः ॥ १३७ ॥
शिवप्रकाशसन्तुष्टश्शिवाद्वैतप्रतिष्ठितः ।
शिवगङ्गातटाकस्थ श्शिवज्ञानप्रदायकः ॥ १३८ ॥
शीताचलप्रान्त्यपूज्यश्शीप्रातीरजनाश्रयः ।
शुभाशुभपरित्यागी शुभाशुभविमत्सरः ॥ १३९ ॥
शुक्लकृष्णगतिज्ञानी शुभंयुश्शिशिरात्मकः ।
शुकवज्जन्मसंसिद्धश्शेषाद्रिस्वामिवत्सलः ॥ १४० ॥
शैववैष्णवशाक्तादि विरोधप्रतिरोधकः ।
शृंगारादिरसालंबो शृंगाररसविप्रियः ॥ १४१ ॥
श्रवणाद्यर्थतत्त्वज्ञश्श्रवणानन्दभाषितः ।
शोणेशलब्धसञ्चारी शोणेशो शोणतीर्थवित् ॥ १४२ ॥
शोकमोहाद्यसंस्पृष्टश्शोणक्षेत्राधिदैवतम् ।
श्रीदः श्रीशः श्रीनिवासः श्रीकण्ठमततत्त्ववित् ॥ १४३ ॥

श्रीविद्यामन्त्रतत्त्वज्ञः श्रीवैष्णवमतप्रियः ।
श्रुतितात्पर्यनिर्वक्ता श्रुतमात्रावधारणः ॥ १४४ ॥
श्रुतश्रोतव्यसन्तुष्टः श्रौतमार्गसमर्थकः ।
षडध्वध्वान्तविध्वंसी षडूर्मिभयभञ्जनः ॥ १४५ ॥
षड्ग्रन्थिभेदचतुरष्षड्गुणी षट्प्रमाणवान् ।
षट्कोणमध्यनिलयष्षडरिघ्नष्षडाश्रयः ॥ १४६ ॥
षण्डत्वघ्नष्षडाधारनिर्यातष्षडनादिवित् ।
सर्वज्ञस्सर्ववित्सर्वस्सार्वस्सर्वमनस्स्थितः ॥ १४७ ॥
सदसन्निर्णयज्ञानी सर्वभूतसमाशयः ।
सर्वश्रुतिस्सर्वचक्षुस्सर्वाननकरादिमान् ॥ १४८ ॥
सर्वेन्द्रियगुणाभासस्सर्वसंबन्धवर्जितः ।
सर्वभृत्सर्वकृत्सर्वहरस्सर्वहितेरतः ॥ १४९ ॥
सर्वारंभपरित्यागी सद्गुणध्यायितारकः ।
सर्वभूतनिशाबुद्धस्स्वजागरनिद्रितः ॥ १५० ॥
सर्वाश्चर्यमयस्सभ्यस्सङ्कल्पघ्नस्सदातनः ।
सर्गादिमध्यनिधनस्सकृत्स्मृतिविमुक्तिदः ॥ १५१ ॥
संयमी सत्यसंधश्च संस्कारपरिवर्जितः ।
समस्समविभक्तांगस्समदृक् समसंस्थितः ॥ १५२ ॥
समर्थस्समरद्वेषी समर्यादस्समाहितः ।
समयज्ञस्सदानन्दस्समाहृतनिजेन्द्रियः ॥ १५३ ॥
सत्तासंविन्मयज्योतिस्संप्रदायप्रवर्तकः ।
समस्तवृत्तिमूलाहं वृत्तिनाशोपदेशकः ॥ १५४ ॥
सम्राट् समृद्धस्संबुद्धस्सर्वश्रुतिमनोहरः ।
सरलस्सरसस्सर्वरसस्सर्वानुभूतियुक् ॥ १५५ ॥
सर्वेश्वरस्सर्वनिधिस्सर्वात्मा सर्वसाधकः ।
सहजप्राप्तकर्मानुष्ठानत्यागनिषेधकः ॥ १५६ ॥

सहिष्णुस्सात्त्विकाहारस्सात्त्विकज्ञानिवीक्षितः ।
सत्त्वाधिकमनोबुद्धिसुखधैर्यविवर्धकः ॥ १५७ ॥
सात्त्विकत्यागयोगज्ञस्सात्त्विकाराध्यवैभवः ।
सार्धषोडशवर्षाप्तपारिव्राज्यो विरक्तधीः ॥ १५८ ॥
सामगानप्रियस्साम्यवैषम्यमतिकृन्तनः ।
साधिताखिलसिद्धान्तस्सामवित्सामगायनः ॥ १५९ ॥
सिद्धार्थस्सिद्धसङ्कल्पस्सिद्धिदस्सिद्धसाधनः ।
सिद्ध्यसिद्धिसमस्सिद्धस्सिद्धसंघसमर्चितः ॥ १६० ॥
सिसाधयिषुलोकेड्यस्सहायांवासहायवान् ।
सुन्दरस्सुन्दरक्षेत्र विद्याभ्यासविलासभृत् ॥ १६१ ॥
सुन्दरेश्वरलीलाकृत्सुन्दरानन्दवर्द्धनः ।
सुरर्षिसन्नुतस्सूक्ष्मस्सूरिदृश्यपदस्थितः ॥ १६२ ॥
सुदर्शनस्सुहृत्सूरिस्सूनृतोक्तिवदावदः ।
सूत्रवित्सूत्रकृत्सूत्रं सृष्टिवैतथ्यबोधकः ॥ १६३ ॥
सृष्टिवाक्यमहावाक्यैककण्ठ्यप्रतिपादकः ।
सृष्टिहेतुमनोनाशी सृष्ट्यधिष्ठाननिष्ठितः ॥ १६४ ॥
स्रक्चन्दनादिविषयविरागी स्वजनप्रियः ।
सेवानम्रस्वभक्तौघ सद्योमुक्तिप्रदायकः ॥ १६५ ॥
सोमसूर्याग्न्यप्रकाश्य स्वप्रकाशस्वरूपदृक् ।
सौन्दर्यांबातपस्संपत्परीपाकफलायितः ॥ १६६ ॥
सौहित्यविमुखस्स्कन्दाश्रमवासकुतूहली ।
स्कन्दालयतपोनिष्ठस्स्तव्यस्तावकवर्जितः ॥ १६७ ॥
सहस्रस्तंभसंयुक्त मण्डपान्तरमाश्रितः ।
स्तैन्यस्थानस्तोत्रशास्त्र गेयस्स्मृतिकरस्स्मृतिः ॥ १६८ ॥
सामरस्यविधानज्ञस्संघसौभ्रात्रबोधकः ।
स्वभावभद्रो मध्यस्थस्स्त्रीसन्दासविधायकः ॥ १६९ ॥

स्तिमितोदधिवज्ज्ञानशक्तिपूरितविग्रहः ।
स्वात्मतत्त्वसुखस्फूर्तितुन्दिलस्वस्वरूपकः ॥ १७० ॥
स्वस्वधर्मरतश्लाघी स्वभूस्स्वच्छन्दचेष्टितः ।
स्वस्वरूपपरिज्ञान परामृतपदस्थितः ॥ १७१ ॥
स्वाध्यायज्ञानयज्ञेज्यस्स्वतस्सिद्धस्वरूपदृक् ।
स्वस्तिकृत्स्वस्तिभुक्स्वामी स्वापजाग्रद्विवर्जितः ॥ १७२ ॥
हन्तृहन्तव्यताशून्य शुद्धस्वात्मोपदेशकः ।
हस्तपादाद्यसंग्राह्य निर्लिप्तपरमार्थदृक् ॥ १७३ ॥
हत्यादिपापशमनो हानिवृद्धिविवर्जितः ।
हितकृद्धूणदेशीय जनवर्णितवैभवः ॥ १७४ ॥
हृदयब्रह्मतत्त्वज्ञो हृदयान्वेषदेशनः ।
हृदयस्थो हृदाकाशस्वरूपी हृद्गुहाशयः ॥ १७५ ॥
हार्दाकाशान्तरगत बाह्याकाशादिवस्तुदृक् ।
हृदयस्थानतत्त्वज्ञो हृदहंनाशपण्डितः ॥ १७६ ॥
हेयोपादेयरहितो हेमन्तर्तुकृतोदयः ।
हरिब्रह्मेन्द्रदुष्प्रापस्वाराज्योर्जितशासनः ॥ १७७ ॥
हतासुरप्रकृतिको हंसो हृद्यो हिरण्मयः ।
हार्दविद्याफलीभूतो हार्दसन्तमसापहः ॥ १७८ ॥
सेतुस्सीमा समुद्रश्च समाभ्यधिकवर्जितः ।
पुराणः पुरुषः पूर्णोऽनन्तरूपस्सनातनः ॥ १७९ ॥
ज्योतिःप्रकाशः प्रथितस्स्वयंभानः स्वयंप्रभुः ।
सत्यं ज्ञानं सुखं स्वस्थस्स्वानुभूः परदैवतम् ॥ १८० ॥
महर्षिश्च महाग्रासो महात्मा भगवान्वशी ।
अहमर्थोऽप्रमेयात्मा तत्त्वं निर्वाणमुत्तमम् ॥ १८१ ॥
अनाख्यवस्तु मुक्तात्मा बन्धमुक्तिविवर्जितः ।
अदृश्यो दृश्यनेता च मूलाचार्यस्सुखासनः ॥ १८२ ॥

अन्तर्यामी पारशून्यो भूमा भोजयिता रसः ।

---

कोऽहं मार्गधनुष्पाणि र्नाहं तत्त्वसुदर्शनः ।
सोहं बोधमहाशङ्खो भगवान्रमणोऽवतु ॥ १ ॥
(इति त्रिवारं)

इति ते नामसाहस्रं रमणस्य महात्मनः ।
कथितं कृपया देवि ! गोप्याद्गोप्यतरं मया ॥ २ ॥

य इदं नामसाहस्रं भक्त्या पठति मानवः ।
तस्य मुक्तिरयत्नेन सिद्ध्यत्येव न संशयः ॥ ३ ॥

विद्यार्थी लभते विद्यां विवाहार्थी गृही भवेत् ।
वैराग्यकामो लभते वैराग्यं भवतारकम् ॥ ४ ॥

येन येन च यो योऽर्थी स स तं तं समश्नुते ।
सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् ॥ ५ ॥

दुर्देशकालोत्थदुरामयार्ताः
दौर्भाग्यतापत्रयसन्निरुद्धाः ।
नराः पठन्तो रमणस्य नाम-
साहस्रमीयुस्सुखमस्तदुःखम् ॥ ६ ॥

इति श्रीगौतममहर्षिप्रोक्तं श्रीरमणसहस्रनामस्तोत्रं
संपूर्णम्

॥ शुभमस्तु ॥

---

## ॥ श्रीरमणसहस्रनामावलिः ॥

ओं अरुणेशमहाशक्तिनिपातप्रति-
बोधिताय नमः
अचिन्त्यपरनिर्वाणस्थितये नमः
अव्यक्तशक्तिकाय नमः
अनभ्यासश्रमावाप्तसमस्तनिगमा-
गमाय नमः
अरुणाचलनाथीयपञ्चरत्नप्रकाश-
काय नमः
अनाहतान्यहृदयस्थानबोधन-
पण्डिताय नमः
अकारादिक्षकारान्तमातृकामन्त्र-
मालिकाय नमः
अन्तर्गतमहाशक्तये
अणिमादिगुणान्विताय नमः
अभ्यासातिशयज्ञाताय नमः १०
अत्याश्चर्यचरित्रकाय नमः
अतिवर्णाश्रमाचाराय नमः
अचिन्त्यशक्तये नमः
अमोघदृशे नमः
अङ्गावन्त्यादिदेशीयमुमुक्षुजनता-
श्रयाय नमः
अन्तर्मुखाय नमः
अन्तरारामाय नमः

ओं अन्तर्यामिणे नमः
अहमर्थदृशे नमः
अहमर्थैकलक्ष्यार्थाय नमः २०
अरुणाद्रिमयाय नमः
अरुणाय नमः
अपीताम्बाङ्गनिर्माल्यपयःपानैक-
जीविताय नमः
अध्यात्मयोगनिलयाय नमः
अदीनात्मने नमः
अघमर्षणाय नमः
अकायाय नमः
भक्तकायस्थाय नमः
कालचक्रप्रवर्तकाय नमः
आजानुबाहवे नमः ३०
अक्षोभ्याय नमः
आत्मवते नमः
अनसूयकाय नमः
आवर्तक्षेत्रसञ्जाताय नमः
आर्तरक्षणतत्पराय नमः
अक्षिपेयामृताम्भोधये नमः
आहूयैश्वर्यदायकाय नमः
इतिहासपुराणज्ञाय नमः
इष्टापूर्तफलप्रदाय नमः

ओं इडापिङ्गलिकामध्यसुषुम्नाग्रन्थि-
भेदकाय नमः ४०
इडापिङ्गलिकामध्यसुषुम्नामध्य-
भासुराय नमः
इष्टार्थदाननिपुणाय नमः
इन्द्रभोगविरक्तधिये नमः
ईशानाय नमः
ईषणाहीनाय नमः
ईतिबाधाभयापहाय नमः
उपास्यमूर्तये नमः
उत्साहसंपन्नाय नमः
उरुविक्रमाय नमः
उदासीनवदासीनाय नमः ५०
उत्तमज्ञानदेशिकाय नमः
ऊर्द्ध्वरेतसे नमः
ऊर्द्ध्वगतये नमः
उटजस्थाय नमः
उदारधिये नमः
ऋषये नमः
ऋषिगणस्तुत्याय नमः
ऋजुबुद्धये नमः
ऋजुप्रियाय नमः
ऋतंभराय नमः ६०
ऋतप्रज्ञाय नमः
ऋजुमार्गप्रदर्शकाय नमः
एवमित्यविनिर्णेयाय नमः

ओं एनःकूटविनाशनाय नमः
ऐश्वर्यदाननिपुणाय नमः
औदार्यगुणमण्डिताय नमः
ओँकारपदलक्ष्यार्थाय नमः
औपम्यपरिवर्जिताय नमः
कटाक्षस्यन्दिकरुणाय नमः
कटिबद्धालमल्लकाय नमः ७०
कमनीयचरित्राढ्याय नमः
कर्मविदे नमः
कविपुङ्गवाय नमः
कर्माकर्मविभागज्ञाय नमः
कर्मलेपविवर्जिताय नमः
कलिदोषहराय नमः
कम्राय नमः
कर्मयोगप्रवर्तकाय नमः
कर्मन्दिप्रवराय नमः
कल्याय नमः ८०
कल्याणगुणमण्डिताय नमः
कान्तिपत्तनसन्दृष्टाऽरुणज्योतिः-
प्रहर्षिताय नमः
कामहन्त्रे नमः
कान्तमूर्तये नमः
कालात्मने नमः
कालसूत्रहृते नमः
कांक्षाहीनाय नमः
कालकांक्षिणे नमः

ओं काशीवासफलप्रदाय नमः
काश्मीरदेश्यसेव्यांघ्रये नमः ९०
नेफालीयसमर्चिताय नमः
कामकारनिराकर्त्रे नमः
कृतकृत्यत्वकारकाय नमः
काव्यकण्ठसुधीदृष्टकार्तिकेयस्व-
रूपधृते नमः
किङ्करीकृतभूपालाय नमः
कीर्तिमते नमः
कीर्तिवर्द्धनाय नमः
कुमाराय नमः
कुतलामोदाय नमः
कुकुटुंबिने नमः १००
कुलोद्भूताय नमः
कुष्ठापस्माररोगघ्नाय नमः
कुसुमारामनिष्ठिताय नमः
कृपालवे नमः
कृपणालंबाय नमः
कृशानुसदृशाय नमः
कृशाय नमः
केरलान्ध्रादिभाषाज्ञाय नमः
केरलान्ध्रजनेडिताय नमः
कैवल्यपदनिश्रेणये नमः ११०
कैवल्यसुखदायकाय नमः
कोहंनाहंसोहमितिस्वात्मान्वेषण-
मार्गदृशे नमः

ओं कोहंविमर्शब्रह्मास्त्रनाशिताशेष-
विभ्रमाय नमः
कोशालयप्रतिष्ठात्रे नमः
कोशवते नमः
कोशवीक्षित्रे नमः
क्षमावते नमः
क्षिप्रसन्तुष्टाय नमः
क्षपिताशेषकल्मषाय नमः
क्षतकर्मणे नमः १२०
क्षताविद्याय नमः
क्षीणभक्तजनावनाय नमः
क्षामनाशिने नमः
क्षुधाहीनाय नमः
क्षुद्रघ्नाय नमः
क्षितिमण्डनाय नमः
क्षेत्रज्ञाय नमः
क्षेमदाय नमः
क्षेमाय नमः
क्षेमार्थिजनवन्दिताय नमः १३०
क्षेत्राटनपरिश्रान्तभक्तक्षिप्रप्रसाद-
नाय नमः
क्ष्म्रौंमन्त्रबीजतत्त्वज्ञाय नमः
क्षेत्राजीवफलप्रदाय नमः
गंभीराय नमः
गर्विताय नमः
गर्वविहीनाय नमः

ओं गर्वनाशनाय नमः
गद्यपद्यप्रियाय नमः
गम्याय नमः
गायत्रीमन्त्रबोधिताय नमः १४०
गिरीशाय नमः
गीष्पतये
गुण्याय नमः
गुणातीताय नमः
गुणाकराय नमः
गृहिणे नमः
गृहविनिर्मुक्ताय नमः
ग्रहातिग्रहसंजयिने नमः
गीतोपदेशसारादिग्रन्थकृते नमः
ग्रन्थिभेदकाय नमः १५०
गुरुमूर्ततपोनिष्ठाय नमः
नैसर्गिकसुहृद्वराय नमः
गृहिमुक्त्यधिकारित्वव्यवस्थापन-
तत्पराय नमः
गोविन्दाय नमः
गोकुलत्रात्रे नमः
गोष्ठीवते नमः
गोधनान्विताय नमः
चराचरहिताय नमः
चक्षुरुत्सवाय नमः
चतुराय नमः १६०
चलाय नमः

ओं चतुर्वर्गचतुर्भद्रप्रदाय नमः
चरमदेहभृते नमः
चाण्डालचटकश्वाऽहिकिटिकी-
शहितङ्कराय नमः
चित्तानुवर्तिने नमः
चिन्मुद्रिणे नमः
चिन्मयाय नमः
चित्तनाशकाय नमः
चिरन्तनाय नमः
चिदाकाशाय नमः १७०
चिन्ताहीनाय नमः
चिदूर्जिताय नमः
चोरहणे नमः
चोरदृशे नमः
चोरचपेटाघातनन्दिताय नमः
छलच्छद्मवचोहीनाय नमः
शत्रुजिते नमः
शत्रुतापनाय नमः
छत्राकाराय नमः
छान्दसेड्याय नमः १८०
छिन्नकर्मादिबन्धनाय नमः
छिन्नद्वैधाय नमः
छिन्नमोहाय नमः
छिन्नहृदे नमः
छिन्नकल्मषाय नमः
जगद्गुरवे नमः

ओं जगत्प्राणाय नमः
जगदीशाय नमः
जगत्प्रियाय नमः
जयन्तीजाय नमः १९०
जन्महीनाय नमः
जयदाय नमः
जनमोहनाय नमः
जाग्रत्स्वप्नसुषुप्त्यादिसाक्षिणे नमः
जाड्यविनाशकाय नमः
जातिवर्णभिदाशून्याय नमः
जितात्मने नमः
जितभूतकाय नमः
जितेन्द्रियाय नमः
जितप्राणाय नमः २००
जितान्तरशत्रुसञ्चयाय नमः
जीवब्रह्मैक्यविदे नमः
जीवन्मुक्ताय नमः
जीवत्वनाशकाय नमः
ज्योतिर्लिंगमयज्योतिषे नमः
समलोष्टाश्मकाञ्चनाय नमः
जैत्रे नमः
ज्यायसे नमः
ज्ञानमूर्तये नमः
ज्ञानिने नमः २१०
ज्ञानमहानिधये नमः

ओं ज्ञानज्ञातृज्ञेयरूपत्रिपुटीभावनोज्झिताय नमः
ज्ञातसर्वागमाय नमः
ज्ञानगम्याय नमः
ज्ञातेयसन्नुताय नमः
ज्ञानविज्ञानतृप्तात्मने नमः
ज्ञानसंच्छिन्नसंशयाय नमः
ज्ञानाग्निदग्धकर्मणे नमः
ज्ञानोपायप्रदर्शकाय नमः
ज्ञानयज्ञविधिप्रीताय नमः २२०
ज्ञानावस्थितमानसाय नमः
ज्ञाताऽज्ञातान्यचिन्मात्राय नमः
ज्ञानवृद्धोपलालिताय नमः
तत्त्वज्ञाय नमः
तत्त्वविज्ञेत्रे नमः
तत्त्वमस्यादिलक्षिताय नमः
तत्त्वभाषणसन्तुष्टाय नमः
तत्त्वबोधकदेशिकाय नमः
तत्पदार्थैकसंलीनाय नमः
तत्त्वान्वेषणतत्पराय नमः २३०
तपनाय नमः
तपनीयांगाय नमः
तमस्सन्तापचन्द्रमसे नमः
तपस्विने नमः
तापसाराध्याय नमः
तपःक्लिष्टतनूद्वहाय नमः

ओं तपस्तत्त्वार्थसारज्ञाय नमः
तपोमूर्तये नमः
तपमयाय नमः
तपोबलसमाकृष्टभक्तसङ्घसमावृताय नमः २४०
तापत्रयाग्निसन्तप्तजनसंजीवनामृताय नमः
तातादेशाप्तशोणाद्रये नमः
ताताऽरुणमहेश्वराय नमः
तातान्तिकसमागन्त्रे नमः
तातान्वेषणतत्पराय नमः
तितिक्षवे नमः
तीर्थविदे नमः
तीर्थाय नमः
तुरीयाय नमः
तुष्टमानसाय नमः २५०
तुल्यनिन्दास्तुतये नमः
तूष्णींशीलाय नमः
तृष्णाविवर्जिताय नमः
तेजस्विने नमः
त्यक्तविषयाय नमः
त्रयीभावार्थकोविदाय नमः
त्रिदिवेशमुखोपास्याय नमः
त्रिवर्गाय नमः
त्रिगुणात्मकाय नमः
त्रैलोक्यबुधसंपूज्याय नमः २६०

ओं त्रैलोक्यग्रासबृंहिताय नमः
त्रैलोक्यसृष्टिस्थितिकृते नमः
त्रैगुण्यविषयोज्झिताय नमः
त्रैगुण्यविषवेगघ्नाय नमः
दक्षाय नमः
दग्धवपुर्धराय नमः
दर्शनीयाय नमः
दयामूर्तये नमः
दक्षिणास्याय नमः
दमान्विताय नमः २७०
दण्डधृते नमः
दण्डनीतिस्थाय नमः
दक्षिणाय नमः
दंभवर्जिताय नमः
दहराकाशमध्यस्थचिदाकाशप्रतिष्ठिताय नमः
दशदिक्पालसंपूज्याय नमः
दशदिग्व्यापिसद्यशसे नमः
दक्षिणद्वीपविख्याताय नमः
दाक्षिणात्यकलाकवये नमः
दारिद्र्यध्वंसकाय नमः २८०
दान्ताय नमः
दारितक्लेशसन्ततये नमः
दासीदासभराय नमः
दिव्याय नमः
दिष्ट्याबुद्धाय नमः

ओं दिगम्बराय नमः
दीर्घदर्शिने नमः
दीप्यमानाय नमः
दीनबन्धवे नमः
दृगात्मकाय नमः २९०
दृग्दृश्यभेदधीशून्याय नमः
दर्शनाय नमः
दृप्तखण्डकाय नमः
देववन्द्याय नमः
देवतेशाय नमः
दोषज्ञाय नमः
दोषनाशनाय नमः
द्वादशार्णमनुध्येयाय नमः
द्वादशान्तस्थलस्थिताय नमः
दुर्विगाह्याय नमः ३००
दुराधर्षाय नमः
दुराचारनिवर्तकाय नमः
दैविकाय नमः
द्राविडाय नमः
द्वीपान्तरविख्यातवैभवाय नमः
द्वितीयातिथिसंभूताय नमः
द्वैतभावविमुक्तधिये नमः
द्वैताऽद्वैतमतातीताय नमः
द्वैतसन्तमसापहाय नमः
धनदाय नमः ३१०
धर्मसूक्ष्मज्ञाय नमः

ओं धर्मराजे नमः
धार्मिकप्रियाय नमः
धात्रे नमः
धातृसमश्रीकाय नमः
धातुशुद्धिविधायकाय नमः
धारणाशक्तिमते नमः
धीराय नमः
धुरीणाय नमः
धृतिवर्द्धनाय नमः ३२०
धीरोदात्तगुणोपेताय नमः
ध्याननिष्ठाय नमः
ध्रुवस्मृतये नमः
नमज्जनोद्धारणकृते नमः
नरवाहनसन्निभाय नमः
नवनीतसमस्वान्ताय नमः
नतसाधुजनाश्रयाय नमः
नरनारीगणोपेताय नमः
नगसानुकृताश्रमाय नमः
नममेत्यव्यययुताय नमः ३३०
नवीनाय नमः
नष्टमानसाय नमः
नयनानन्ददाय नमः
नम्याय नमः
नामोच्चारणमुक्तिदाय नमः
नागस्वाम्यनुजाय नमः
नागसुन्दरज्येष्ठतांगताय नमः

ओं नादबिन्दुकलाभिज्ञाय नमः
नादब्रह्मप्रतिष्ठिताय नमः
नादप्रियाय नमः ३४०
नारदादिपूज्याय नमः
नामविवर्जिताय नमः
नामिने नमः
नामजपप्रीताय नमः
नास्तिकत्वविघातकृते नमः
नासाग्रन्यस्तदृशे नमः
नामब्रह्मातीताय नमः
निरञ्जनाय नमः
निरञ्जनाश्रयाय नमः
नित्यतृप्ताय नमः ३५०
निश्श्रेयसप्रदाय नमः
निर्यत्नसिद्धनित्यश्रिये नमः
नित्यसिद्धस्वरूपदृशे नमः
निर्ममाय नमः
निरहंकाराय नमः
निरवद्याय नमः
निराश्रयाय नमः
नित्यानन्दाय नमः
निरातङ्काय नमः
निष्प्रपञ्चाय नमः ३६०
निरामयाय नमः
निर्मलाय नमः
निश्चलाय नमः

ओं नित्याय नमः
निर्मोहाय नमः
निरुपाधिकाय नमः
निस्संगाय नमः
निगमस्तुत्याय नमः
निरीहाय नमः
निरुपप्लवाय नमः ३७०
नित्यशुद्धाय नमः
नित्यबुद्धाय नमः
नित्यमुक्ताय नमः
निरन्तराय नमः
निर्विकाराय नमः
निर्गुणात्मने नमः
निष्पापाय नमः
निष्परिग्रहाय नमः
निर्भवाय नमः
निस्तुलाय नमः ३८०
निद्राय नमः
निजानन्दैकनिर्भराय नमः
निग्रहानुग्रहसमाय नमः
निकृतिज्ञाय नमः
निदानविदे नमः
निर्ग्रन्थाय नमः
निर्नमस्काराय नमः
निस्तुतये नमः
निरयापहाय नमः

ओं निर्वासनाय नमः ३९०
निर्व्यसनाय नमः
निर्योगक्षेमचिन्तनाय नमः
निर्बीजध्यानसंवेद्याय नमः
निर्वादाय नमः
निश्शिरोरुहाय नमः
पञ्चाक्षरमनुध्येयाय नमः
पञ्चपातकनाशनाय नमः
पञ्चस्कन्धीमताभिज्ञाय नमः
पञ्चकोशविलक्षणाय नमः
पञ्चाग्निविद्यामार्गज्ञाय नमः ४००
पञ्चकृत्यपरायणाय नमः
पञ्चवक्त्राय नमः
पञ्चतपसे नमः
पञ्चताकारणोद्धराय नमः
पञ्चोपचारसंपूज्याय नमः
पञ्चभूतविमर्दनाय नमः
पञ्चविंशतितत्त्वात्मने नमः
महापञ्चदशाक्षराय नमः
पराशरकुलोद्भूताय नमः
पण्डिताय नमः ४१०
पण्डितप्रियाय नमः
परमेष्ठिने नमः
परेशानाय नमः
परिपूर्णाय नमः
परात्पराय नमः

ओं परस्मैज्योतिषे नमः
परस्मै धाम्ने नमः
परमात्मने नमः
परायणाय नमः
पतिव्रताभीष्टदायिने नमः ४२०
पर्यङ्कस्थाय नमः
परार्थविदे नमः
पवित्रपादाय नमः
पापारये नमः
परार्थैकप्रयोजनाय नमः
पालीतीर्थतटोल्लासिने नमः
पाश्चात्यद्वीपविश्रुताय नमः
पित्रे नमः
पितृहिताय नमः
पित्तनाशकाय नमः ४३०
पितृमोचकाय नमः
पितृव्यान्वेषिताय नमः
पीनाय नमः
पातालेशालयस्थिताय नमः
पुनर्वसूदिताय नमः
पुण्याय नमः
पुण्यकृते नमः
पुरुषोत्तमाय नमः
पुन्नागतरुवत्क्षेत्रिणे नमः
पुण्यापुण्यविवर्जिताय नमः ४४०
पूतात्मने नमः

ओं पृथुकप्रीताय नमः
पृथुदाय नमः
पुरोहिताय नमः
प्रतिमाकृतसान्निध्याय नमः
प्रतिग्रहपराङ्मुखाय नमः
प्रमादिवत्सरोद्भूताय नमः
प्रकृतिस्थाय नमः
प्रमाणविदे नमः
प्रतीकोपास्तिविषयाय नमः ४५०
प्रत्युत्तरविचक्षणाय नमः
प्रतीचे नमः
प्रशान्ताय नमः
प्रत्यक्षाय नमः
प्रश्रिताय नमः
प्रतिभानवते नमः
प्रदक्षिणप्रीतमनसे नमः
प्रवालाद्रिसमाश्रयाय नमः
प्राच्यप्रतीच्यदेशीयविबुधाग्रण्य-
वन्दिताय नमः
प्रस्थानभेदसंबोद्ध्याय नमः ४६०
प्रांशवे नमः
प्राणनिरोधकाय नमः
प्रसूतिदिनवृद्धस्त्रीदर्शितज्योति-
राकृतये नमः
प्रार्थितार्थप्रदाय नमः
प्राज्ञाय नमः

ओं प्रावारकनिगूहिताय नमः
प्रातस्स्मर्तव्यचारित्राय नमः
प्राप्तप्राप्तव्यनिर्वृताय नमः
प्रायणस्मृतिसंप्राप्याय नमः
प्रियहीनाय नमः ४७०
प्रियंवदाय नमः
प्रेक्षावते नमः
प्रेष्यरहिताय नमः
फलभूताय नमः
फलप्रदाय नमः
बहुश्रुताय नमः
बहुमताय नमः
बहुपाकिने नमः
बहुप्रदाय नमः
बलवते नमः ४८०
बन्धुमते नमः
बालरूपाय नमः
बाल्यविचेष्टिताय नमः
बालभानुप्रतीकाशाय नमः
बालसन्यासिशब्दिताय नमः
ब्रह्मचर्यतपोयोगश्रुतप्रज्ञासमन्वि-
ताय नमः
ब्रह्मण्याय नमः
ब्रह्मविदे नमः
ब्रह्मणे नमः
ब्रह्मसायुज्यदायकाय नमः ४९०

ओं ब्रह्मार्पितमनोबुद्धये नमः
ब्राह्मणस्वामिनामकाय नमः
ब्रह्मासनस्थिताय नमः
ब्रह्मसूत्रविदे नमः
भगवते नमः
भवाय नमः
भयकृते नमः
भयसंहर्त्रे नमः
भवादाय नमः
भक्तभाविताय नमः ५००
भारूपाय नमः
भावनाग्राह्याय नमः
भावज्ञाय नमः
भाग्यवर्द्धनाय नमः
भारतीयमहाभाग्याय नमः
भारतख्यातिपोषकाय नमः
भारतोद्यद्ज्ञानदीपाय नमः
भावनाभेदकृन्तनाय नमः
भिदाशून्याय नमः
भिदाध्वंसिने नमः ५१०
भावुकाय नमः
भिक्षुकेश्वराय नमः
भूतिदाय नमः
भूतिकृते नमः
भूमिनाथपूर्णांशसंभवाय नमः
भौमब्रह्मणे नमः

ओं भ्रमध्वंसिने नमः
भूहृत्क्षेत्रलक्षिताय नमः
भूतिभूषितसर्वाङ्गाय नमः
मंगलाय नमः ५२०
मंगलप्रदाय नमः
मनसे नमः
बुद्धये नमः
अहंकाराय नमः
प्रकृतये नमः
परस्मै पुंसे नमः
महाशक्तये नमः
महासिद्धये नमः
महोदाराय नमः
महाद्युतये नमः ५३०
महाकर्त्रे नमः
महाभोक्त्रे नमः
महायोगिने नमः
महामतये नमः
महामान्याय नमः
महाभागाय नमः
महासेनमहांशजाय नमः
मर्यादाकृते नमः
महादेवाय नमः
महोरूपिणे नमः ५४०
महायशसे नमः
महोद्यमाय नमः

ओं महोत्साहाय नमः
ममताग्रहपीडनाय नमः
महामन्त्राय नमः
महायन्त्राय नमः
महावाक्योपदेशकाय नमः
महावाक्यार्थतत्त्वज्ञाय नमः
महामोहनिवारकाय नमः
मायाविने नमः ५५०
मानदाय नमः
मानिने नमः
मातृमुक्तिविधायकाय नमः
मानावमानसाम्यात्मने नमः
मालूराधस्तपस्स्थिताय नमः
मधूकद्रुतलस्थायिने नमः
मातृमते नमः
मातृभक्तिमते नमः
मात्रालयप्रतिष्ठात्रे नमः
मार्गिताय नमः ५६०
मार्गबान्धवाय नमः
मार्गणीयाय नमः
मार्गदर्शिने नमः
मार्गशीर्षकृतोदयाय नमः
मार्गितात्मने नमः
मार्गशून्याय नमः
मितभुजे नमः
मितसञ्चराय नमः

ओं मितस्वप्नावबोधाय नमः
मिथ्याबाह्यनिरीक्षकाय नमः ५७०
मुनये नमः
मुक्ताय नमः
मुक्तिदायिने नमः
मेधाविने नमः
मेध्यभोजनाय नमः
मौनव्याख्यानकृते नमः
मौनिने नमः
मौनभाषाविशारदाय नमः
मौनामौनद्वयातीताय नमः
मौनदाय नमः ५८०
मौनिषु प्रियाय नमः
यज्ञकृते नमः
यज्ञभुजे नमः
यज्ञाय नमः
यजमानाय नमः
यथार्थविदे नमः
यतात्मने नमः
यतिसंपूज्याय नमः
यतिप्राप्याय नमः
यशस्कराय नमः ५९०
यमाद्यष्टांगयोगज्ञाय नमः
यजुश्शाखिने नमः
यतीश्वराय नमः
यवनानुग्रहकराय नमः

ओं यक्षाय नमः
यमनिषूदनाय नमः
यात्राविरहिताय नमः
यानाऽनारूढाय नमः
याज्ञिकप्रियाय नमः
यातनानाशनाय नमः ६००
याच्ञाहीनाय नमः
याचितदायकाय नमः
युक्तकृते नमः
युक्तभुजे नमः
युक्तस्वप्नबोधाय नमः
युगादिकृते नमः
योगीशाय नमः
योगपुरुषाय नमः
योगतत्त्वविवेचकाय नमः
योगासनाय नमः ६१०
योगभूमिसमारोहणसाधकाय नमः
योगिगम्याय नमः
योगफलाय नमः
योगभ्रष्टशुभप्रदाय नमः
योगप्रशंसिने नमः
योगस्थाय नमः
योगक्षेमधुरन्धराय नमः
रक्षकाय नमः
रमणाय नमः
रम्याय नमः ६२०

ओं रमणीयाङ्गसंहतये नमः
रमेशक्लेशसन्दष्टज्योतिरक्लेशदर्श-
नाय नमः
रजोपहाय नमः
रजोमूर्तये नमः
रसिकाय नमः
रसशेवधये नमः
रहस्याय नमः
रञ्जनाय नमः
रस्याय नमः
रत्नगर्भाय नमः ६३०
रसोदयाय नमः
राजविद्यागुरवे नमः
राजविद्याविदे नमः
राजमानिताय नमः
राजसाहारनिर्मुक्ताय नमः
राजसज्ञानदूरगाय नमः
रागद्वेषविनिर्मुक्ताय नमः
रसालाश्रमकोकिलाय नमः
रामागिरामाय नमः
राजश्रिये नमः ६४०
राज्ञे नमः
राज्यहितङ्कराय नमः
राजभोगप्रदाय नमः
राष्ट्रभाषाविदे नमः
राजवल्लभाय नमः

ओं रुदितद्वेषणाय नमः
रुद्राय नमः
लक्ष्मीवते नमः
लक्ष्मिवर्द्धनाय नमः
लज्जालवे नमः ६५०
ललिताय नमः
लब्धलब्धव्याय नमः
लघुसिद्धिदाय नमः
लयविदे नमः
लब्धकामौघाय नमः
लाभालाभसमाशयाय नमः
लयाधिष्ठानतत्त्वज्ञाय नमः
लयपूर्वसमाधिमते नमः
लास्यप्रियाय नमः
लिङ्गरूपिणे नमः ६६०
लिङ्गोत्थाय नमः
लिङ्गवर्जिताय नमः
लिपिलेखचणाय नमः
लोकशिक्षकाय नमः
लोकरक्षकाय नमः
लोकायतमताभिज्ञाय नमः
लोकवार्ताविवर्जिताय नमः
लोकोदासीनभावस्थाय नमः
लोकोत्तरगुणोत्तराय नमः
लोकाध्यक्षाय नमः ६७०
लोकपूज्याय नमः

ओं लोकासारत्वबोधकाय नमः
लोकाकर्षणशक्तात्मशक्तिमत्कान्त-
पर्वताय नमः
लोकानुत्सादकाय नमः
लोकप्रमाणाय नमः
लोकसंग्रहिणे नमः
लोकबोधप्रकाशार्थशोणोद्यद्ज्ञान-
भास्कराय नमः
वरिष्ठाय नमः
वरदाय नमः
वक्रे नमः ६८०
वङ्गदेश्यजनाश्रयाय नमः
वन्दारुजनमन्दाराय नमः
वर्तमानैककालविदे नमः
वनवासरसाभिज्ञाय नमः
वलित्रयविभूषिताय नमः
वसुमते नमः
वस्तुतत्त्वज्ञाय नमः
वन्द्याय नमः
वत्सतरीप्रियाय नमः
वर्णाश्रमपरित्रात्रे नमः ६९०
वर्णाश्रममतातिगाय नमः
वाक्यज्ञाय नमः
वाक्यकुशलाय नमः
वाङ्मनोबुद्ध्यगोचराय नमः
वाद्यगीतप्रियाय नमः

ओं वाजश्रवसे नमः
वापीप्रतिष्ठकाय नमः
वाहनागारनिष्ठावते नमः
वाजिमेधफलप्रदाय नमः
वक्षोदक्षिणभागस्थहृदयस्थान-
दर्शकाय नमः ७००
वचद्भूमन्त्रसंसेव्याय नमः
विचारैकोपदेशकृते नमः
विचारमात्रनिरताय नमः
विवेकिजनतादृताय नमः
विदितात्मने नमः
विधेयात्मने नमः
विस्मितेशादिवीक्षिताय नमः
विरूपाक्षगुहावासिने नमः
विश्वात्मने नमः
विश्वसृजे नमः ७१०
विभवे नमः
विविक्तसेविने नमः
विघ्नेशचैत्यप्राकारसंस्थिताय नमः
विध्यदृष्टमहोदर्शिने नमः
विज्ञानानन्दसुन्दराय नमः
विघसाशिने नमः
विशुद्धात्मने नमः
विपर्यासनिरासकाय नमः
विभूतिसितफालाढ्याय नमः
विरोधोक्तिविनाकृताय नमः ७२०

ओं विश्वंभराय नमः
विश्ववैद्याय नमः
विश्वास्याय नमः
विस्मयान्विताय नमः
वीणागेयाय नमः
वीतमायाय नमः
वीर्यवते नमः
वीतसंशयाय नमः
वृद्धिह्रासविनाभूताय नमः
वृद्धाय नमः ७३०
वृत्तिनिरोधकाय नमः
वृत्तिदाय नमः
वृत्तिबोधेद्धाय नमः
वेणुवाद्यवशंवदाय नमः
वेदवेदान्ततत्त्वज्ञाय नमः
वेषदोषप्रकाशकाय नमः
व्यक्ताव्यक्तस्वरूपज्ञाय नमः
व्यङ्ग्यवाक्यप्रयोगविदे नमः
व्याप्ताखिलाय नमः
व्यवस्थाकृते नमः ७४०
व्यवसायविबोधकाय नमः
वैज्ञानिकाग्रण्यै नमः
वैश्वानराय नमः
व्याघ्राजिनस्थिताय नमः
शरण्याय नमः
शर्मदाय नमः

ओं शक्तिपातबुद्धाय नमः
शमान्विताय नमः
शरीरिवद्भासमानाय नमः
शर्मण्यजनवन्दिताय नमः ७५०
शास्त्रजालमहारण्यवृथाटननिषेधकाय नमः
शास्त्राभ्यासफलीभूतज्ञानविज्ञानतत्पराय नमः
शास्त्रोल्लंघनविद्वेषिणे नमः
शास्त्रमार्गाविलङ्घनाय नमः
शान्तात्मने नमः
शान्तिदाय नमः
शान्तिधनाय नमः
शान्तोपदेशकाय नमः
शाण्डिल्योपास्तिलक्ष्यार्थाय नमः
शास्त्रयोनये नमः ७६०
प्रजापतये नमः
शिवङ्कराय नमः
शिवतमाय नमः
शिष्टेष्टाय नमः
शिष्टपूजिताय नमः
शिवप्रकाशसन्तुष्टाय नमः
शिवाद्वैतप्रतिष्ठिताय नमः
शिवगङ्गातडाकस्थाय नमः
शिवज्ञानप्रदायकाय नमः
शीताचलप्रान्त्यपूज्याय नमः ७७०

ओं शीघ्रातीरजनाश्रयाय नमः
शुभाशुभपरित्यागिने नमः
शुभाशुभविमत्सराय नमः
शुक्लकृष्णगतिज्ञानिने नमः
शुभंयवे नमः
शिशिरात्मकाय नमः
शुकवज्जन्मसंसिद्धाय नमः
शेषाद्रिस्वामिवत्सलाय नमः
शैववैष्णवशाक्तादिविरोधप्रतिरोधकाय नमः
शृङ्गारादिरसालंबाय नमः ७८०
शृङ्गाररसविप्रियाय नमः
श्रवणाद्यर्थतत्त्वज्ञाय नमः
श्रवणानन्दभाषिताय नमः
शोणेशालयसंचारिणे नमः
शोणेशाय नमः
शोणतीर्थविदे नमः
शोकमोहाद्यसंस्पृष्टाय नमः
शोणक्षेत्राधिदैवताय नमः
श्रीदाय नमः
श्रीशाय नमः ७९०
श्रीनिवासाय नमः
श्रीकण्ठमततत्त्वविदे नमः
श्रीविद्यामन्त्रतत्त्वज्ञाय नमः
श्रीवैष्णवमतप्रियाय नमः
श्रुतितात्पर्यनिर्वक्त्रे नमः

ओं श्रुतमात्रावधारणाय नमः
श्रुतश्रोतव्यसन्तुष्टाय नमः
श्रौतमार्गसमर्थकाय नमः
षडध्वध्वान्तविध्वंसिने नमः
षडूर्मिभयभञ्जनाय नमः ८००
षड्ग्रन्थिभेदचतुराय नमः
षड्गुणिने नमः
षट्प्रमाणवते नमः
षट्कोणमध्यनिलयाय नमः
षडरिघ्नाय नमः
षडाश्रयाय नमः
षण्डत्वघ्नाय नमः
षडाधारनिध्यांताय नमः
षडर्नादिविदे नमः
सर्वज्ञाय नमः ८१०
सर्वविदे नमः
सर्वाय नमः
सार्वाय नमः
सर्वमनस्स्थिताय नमः
सदसन्निर्णयज्ञानिने नमः
सर्वभूतसमाशयाय नमः
सर्वश्रुतये नमः
सर्वचक्षुषे नमः
सर्वाननकरादिमते नमः
सर्वेन्द्रियगुणाभासाय नमः ८२०
सर्वसंबन्धवर्जिताय नमः

ओं सर्वभृते नमः
सर्वकृते नमः
सर्वहराय नमः
सर्वहितेरताय नमः
सर्वारंभपरित्यागिने नमः
सगुणध्यायितारकाय नमः
सर्वभूतनिशाबुद्धाय नमः
सर्वजागरनिद्रिताय नमः
सर्वाश्चर्यमयाय नमः ८३०
सभ्याय नमः
संकल्पघ्नाय नमः
सदातनाय नमः
सर्गादिमध्यनिधनाय नमः
सकृत्स्मृतिविमुक्तिदाय नमः
संयमिने नमः
सत्यसंधाय नमः
संस्कारपरिवर्जिताय नमः
समाय नमः
समविभक्ताङ्गाय नमः ८४०
समदृशे नमः
समसंस्थिताय नमः
समर्थाय नमः
समरद्वेषिणे नमः
समर्यादाय नमः
समाहिताय नमः
समयज्ञाय नमः

ओं सदानन्दाय नमः
समाहृतनिजेन्द्रियाय नमः
सत्तासंविन्मयज्योतिषे नमः ८५०
संप्रदायप्रवर्तकाय नमः
समस्तवृत्तिमूलाहंवृत्तिनाशोप-
देशकाय नमः
सम्राजे नमः
समृद्धाय नमः
संबुद्धाय नमः
सर्वश्रुतिमनोहराय नमः
सरलाय नमः
सरसाय नमः
सर्वरसाय नमः
सर्वानुभूतियुजे नमः ८६०
सर्वेश्वराय नमः
सर्वनिधये नमः
सर्वात्मने नमः
सर्वसाधकाय नमः
सहजप्राप्तकर्मानुष्ठानत्यागनिषेध-
काय नमः
सहिष्णवे नमः
सात्त्विकाहाराय नमः
सात्त्विकज्ञानिवीक्षिताय नमः
सत्त्वाधिकमनोबुद्धिसुखधैर्यविव-
र्द्धकाय नमः
सात्त्विकत्यागयोगज्ञाय नमः ८७०

ओं सात्त्विकाराध्यवैभवाय नमः
सार्धषोडशवर्षाप्तपारिव्राज्याय
विरक्तधिये नमः
सामगानप्रियाय नमः
साम्यवैषम्यमतिक्रान्तनाय नमः
साधिताखिलसिद्धीशाय नमः
सामविदे नमः
सामगायनाय नमः
सिद्धार्थाय नमः
सिद्धसंकल्पाय नमः ८८०
सिद्धिदाय नमः
सिद्धसाधनाय नमः
सिद्ध्यसिद्धिसमाय नमः
सिद्धाय नमः
सिद्धसंघसमर्चिताय नमः
सिसाधयिषुलोकेड्याय नमः
सहायांबासहायवते नमः
सुन्दराय नमः
सुन्दरक्षेत्रविद्याभ्यासविलासभृते
नमः
सुन्दरेश्वरलीलाकृते नमः ८९०
सुन्दरानन्दवर्द्धनाय नमः
सुरर्षिसन्नुताय नमः
सूक्ष्माय नमः
सूरिदृश्यपदस्थिताय नमः
सुदर्शनाय नमः

ओं सुहृदे नमः
सूरये नमः
सूनृतोक्तिवदावदाय नमः
सूत्रविदे नमः
सूत्रकृते नमः ९००
सूत्राय नमः
सृष्टिवैतथ्यबोधकाय नमः
सृष्टिवाक्यमहावाक्यैककण्ठ्य-
प्रतिपादकाय नमः
सृष्टिहेतुमनोनाशिने नमः
सृष्ट्यधिष्ठाननिष्ठिताय नमः
स्रक्चन्दनादिविषयविरागिणे
नमः
स्वजनप्रियाय नमः
सेवानम्रस्वभक्तौघसद्योमुक्तिप्रदा-
यकाय नमः
सोमसूर्याग्न्यप्रकाश्यस्वप्रकाश-
स्वरूपदृशे नमः
सौन्दर्यावातपस्संपत्परीपाकफला-
यिताय नमः ९१०
सौहित्यविमुखाय नमः
स्कन्दाश्रमवासकुतूहलिने नमः
स्कन्दालयतपोनिष्ठाय नमः
स्तव्यस्तावकवर्जिताय नमः
सहस्रस्तंभसंयुक्तमण्डपान्तरमाश्रि-
ताय नमः

ओं स्तैन्यस्तेनाय नमः
स्तोत्रशस्त्रगेयाय नमः
स्मृतिकराय नमः
स्मृतये नमः
सामरस्यविधानज्ञाय नमः ९२०
सङ्घसौभ्रात्रबोधकाय नमः
स्वभावभद्राय नमः
मध्यस्थाय नमः
स्त्रीसन्यासविधायकाय नमः
स्तिमितोदधिवज्ज्ञानशक्तिपूरित-
विग्रहाय नमः
स्वात्मतत्त्वसुखस्फूर्तितुन्दिल-
स्वस्वरूपकाय नमः
स्वस्वधर्मरतश्लाघिने नमः
स्वभुवे नमः
स्वच्छन्दचेष्टिताय नमः
स्वस्वरूपपरिज्ञानपरामृतपद-
स्थिताय नमः ९३०
स्वाध्यायज्ञानयज्ञेज्याय नमः
स्वतस्सिद्धस्वरूपदृशे नमः
स्वस्तिकृते नमः
स्वस्तिभुजे नमः
स्वामिने नमः
स्वापजाग्रद्विवर्जिताय नमः
हन्तृहन्तव्यताशून्यशुद्धस्वात्मोप-
देशकाय नमः

ओं हस्तपादाद्यसंग्राह्यनिर्लिप्तपरमार्थ-
दृशे नमः
हत्यादिपापशमनाय नमः
हानिवृद्धिविवर्जिताय नमः ९४०
हितकृते नमः
हूणदेशीयजनवर्णितवैभवाय नमः
हृदयब्रह्मतत्त्वज्ञाय नमः
हृदयान्वेषदेशनाय नमः
हृदयस्थाय नमः
हृदाकाशस्वरूपिणे नमः
हृद्गुहाशयाय नमः
हार्दाकाशान्तरगतबाह्याकाशादि-
वस्तुदृशे नमः
हृदयस्थानतत्त्वज्ञाय नमः
हृदहंनाशपण्डिताय नमः ९५०
हेयोपादेयरहिताय नमः
हेमन्तर्तुकृतोदयाय नमः
हरिब्रह्मेन्द्रदुष्प्रापस्वाराज्योर्जित-
शासनाय नमः
हतासुरप्रकृतिकाय नमः
हंसाय नमः
हृद्याय नमः
हिरण्मयाय नमः
हार्दविद्याफलीभूताय नमः
हार्दसन्तमसापहाय नमः
सेतवे नमः ९६०

ओं सीम्ने नमः
समुद्राय नमः
समाभ्यधिकवर्जिताय नमः
पुराणाय नमः
पुरुषाय नमः
पूर्णाय नमः
अनन्तरूपाय नमः
सनातनाय नमः
ज्योतिषे नमः
प्रकाशाय नमः ९७०
प्रथिताय नमः
स्वयंभानाय नमः
स्वयंप्रभवे नमः
सत्याय नमः
ज्ञानाय नमः
सुखाय नमः
स्वस्थाय नमः
स्वानुभुवे नमः
परदैवताय नमः
महर्षये नमः ९८०
महाग्रासाय नमः
महात्मने नमः
भगवते नमः
वशिने नमः
अहमर्थाय नमः
अप्रमेयात्मने नमः

ओं तत्त्वाय नमः
उत्तमनिर्वाणाय नमः
अनाख्यवस्तुने नमः
मुक्तात्मने नमः ९९०
बन्धमुक्तिविवर्जिताय नमः
अदृश्याय नमः
दृश्यनेत्रे नमः

ओं मूलाचार्याय नमः
सुखासनाय नमः
अन्तर्यामिणे नमः
पारशून्याय नमः
भूम्ने नमः
भोजयित्रे नमः
रसाय नमः १०००

इति श्रीरमणसहस्रनामावलिस्समाप्ता ॥

---

## ॥ शुद्धाशुद्धपत्रिका ॥

| पु. | पं. | अशुद्धं | शुद्धं |
|---|---|---|---|
| 4 | 14 | महानैवेद्य | महानैवेद्यं |
| 5 | 12 | कलंश | कलशं |
| 9 | 21 | समप | समर्प |
| 10 | 11 | सव श्रा | सर्व श्री |
| 14 | 14 | समचितः | समर्चितः |
| 15 | 15 | चतुभद्र | चतुर्भद्र |
| 16 | 23 | भावाथकों | भावार्थको |
| 18 | 15 | निग्रन्थों | निर्ग्रन्थो |
| ,, | 22 | सपूज्यों | संपूज्यो |
| 21 | 26 | वजितः | वर्जितः |
| 23 | 24 | शोणेशल्य | शोणेशालय |
| ,, | ,, | शोणेशोशोण | शोणेशश्शोण |
| 28 | 13 | "कालचक्रप्रवर्तकाय नमः" इति नामानन्तरं "अक्षिपेयामृतांभोधये नमः" "आह्वयैश्वर्यदायकाय नमः" इति नामद्वयं पठनीयम्. | |

Liberty Press, Madras.

# ॥ श्रीरमणाश्रमपुस्तकालयम् ॥

॥ संस्कृतानि ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणगीता | .... | ० | ४ | ० |
| सद्दर्शनम् सभाष्यम्-श्रीरमणमहर्षिकृत द्राविडभाषा-ग्रन्थस्य गणपतिमुनिकृतानुवादः सभाष्यः | .... | ० | १२ | ० |
| उपदेशसारः-श्रीरमणमहर्षिभिः प्रणीतः | .... | ० | ० | ६ |
| श्रीरमणाष्टोत्तरशतनामस्तोत्रम् | .... | ० | ० | ६ |
| श्रीरमणचत्वारिंशत्-गणपतिमुनिकृतं स्तोत्रम् | .... | ० | १ | ० |
| गीतमाला-गणपतिमुनिविरचिता | .... | ० | ४ | ० |
| श्रीअरुणाचलपञ्चरत्नदर्पणम् | .... | ० | २ | ० |
| श्रीरमण-मानसिकपूजा, श्रीगुरुविज्ञप्तिः — वे. जगदीश्वरशास्त्री | .... | ० | २ | ० |
| श्रीरमणस्तोत्ररत्नावली-द्राविडभाषानुवादसहिता | .... | ० | ६ | ० |

॥ हिन्दी ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणचरितामृत | .... | १ | १२ | ० |
| श्रीमहर्षि-११२ चित्रों के सहित | .... | ० | ८ | ० |
| मैं कौन हूं | .... | ० | २ | ० |

॥ मराठी ॥

| | | | | |
|---|---|---|---|---|
| श्रीरमणप्रस्थानत्रयी | .... | १ | ४ | ० |

मिलने का पता—श्री निरञ्जनानन्दस्वामी,

सर्वाधिकारी,

श्रीरमणाश्रमम्, तिरुवण्णामलै.

[दाक्षिण भारत]